# दुर्वृत्तपद्धतिः ॥

'आचारहीन न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः । छन्दांस्येन विजहत्यन्तकाले नीड शकुन्ता इव जातपक्षाः,' 'न विद्यया केवलया तपसा वापि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्र प्रचक्षते ॥', 'सर्वागमानामाचारः प्रथम परिकल्प्यते,' 'कुलमाचारकर्मणा' इत्यादिभिर्वृत्तस्यावश्यकत्वमभिप्रेत्याह—

**गुणजालप्रकर्षेऽपि धीवरत्वेऽपि जन्मतः ।**
**सर्वतीर्थावगाहेऽपि नीचवृत्तिर्न शस्यते ॥ १ ॥**

**गुणजालेति** ॥ गुणजालानां गुणसमूहाना प्रकर्षेऽपि गुणयुक्तानायानामाधिक्येऽपि; 'जाल समूह आनाये' इत्यमरः । जन्मतः जन्मप्रभृतीत्यर्थः, धीवरत्वेऽपि बुद्ध्या श्रेष्ठत्वेऽपि, जन्मतः जात्या कैवर्तत्वेऽपि, 'कैवर्ते दाशधीवरौ' इत्यमरः । सर्वतीर्थेषु सर्वपुण्योदकेषु अवगाहेऽपि जलावतारस्थानेषु अवगाहनेऽपि, 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ' इत्यमरः । नीचवृत्तिः निकृष्टाचारः निम्नदेशस्थितिश्च, कैवर्ताना मत्स्यग्रहणाय निम्नदेशस्थितत्वात्; न शस्यते न स्तूयते, अतिशयावह न भवतीत्यर्थः । अत्र कैवर्तसाम्यध्वनिः ॥ १ ॥

**द्विजराजाङ्कसंस्थोऽपि सन्मार्गाचारवानपि ।**
**विशुद्धिरहितः कश्चिन्न विन्दत्यकलङ्कताम् ॥ २ ॥**

**द्विजेति** ।। द्विजराजाङ्के ब्राह्मणश्रेष्ठसमीपे, सस्था स्थितिर्यस्य स तथोक्तः ; 'अङ्कः स्थानान्तिकामर्षरूपकोत्सङ्गलक्ष्मसु' इति विश्वः, 'सस्थाऽचारे स्थितौ मृतौ' इत्यमरः । यद्वा द्विजराजाङ्के सतिष्ठत इति संस्थः, सुपि स्थ इति कः । सन्मार्गाचारवानपि, स्पष्ट ; अन्यत्र चन्द्रोत्सङ्गवर्त्यपि ; सन्मार्गे नक्षत्रमार्गे, आ समन्ताचारवान् सचारवानित्यर्थः । विशुद्धिरहितः परिशुद्धिरहितः कश्चित्, न विद्यते कलङ्कोऽपवादो यस्य तस्य भावस्तत्ता ताम्, अन्यत्र अचिह्नरूपत्व ; 'कलङ्कोऽङ्कापवादयोः' इत्यमरः । न विन्दति न प्राप्नोति, सापवादत्वमेव प्राप्नोतीत्यर्थः ॥ २ ॥

सरलहृदयोऽपि तारकमन्त्रोपासकोऽपि, परिपूर्णप्रियभाग्योऽपि, शुभाचार परित्यज्य, नरकपतनमेव भजतीति—'गोभिः पशुभिरश्वैश्च कृष्या च सुसमृद्धया । कुलानि न प्ररोहन्ति यानि हीनानि वृत्ततः । वृत्त यत्नेन सरक्षेद्वित्तमेति च याति च । अक्षीणो वृत्ततः क्षीणो वृत्ततस्तु हतो हतः ।' इत्युक्तरीत्याह —

**अवक्रस्तारकाधीशः परिपूर्णप्रियोदयः ।**
**प्राचीं दिशमतिक्रम्य पतनं प्रतिपद्यते ॥ ३ ॥**

**अवक्र इति** ।। प्राची दिश शुभाचारं, पूर्वककुभ च ॥

दुराचाराणां श्रेष्ठब्राह्मण्यादिजातियोगोऽपि प्रत्यवायभूयस्त्वायेत्याह—

**पततां हन्त केषांचिद्भजते मलिनात्मनाम् ।**
**विशुद्धवर्णयोगोऽपि विपरीतनिमित्तताम् ॥ ४ ॥**

**पततामिति ॥** मलिनात्मना दुराचाराणा, अत एव पतता, द्विजातिकर्मभ्यो हानिः पतन तद्वताम्; विशुद्धवर्णयोगः ब्राह्मणजातियोगः, विपरीतनिमित्तता अत्यन्तनिकृष्टताहेतुताम्, भजते । यथा मलिनात्मना श्यामवर्णानां पतता वृक्षेभ्यः स्रमता केषाचित्पत्राणामित्यर्थः, विशुद्धवर्णयोगः पाण्डुत्वयोग , विपरीतनिमित्तता पाण्डु पत्रविरुद्धकिसलयादिनिमित्तता भजते— इति पत्रसमाधिः । पतता स्कन्धफालादिदेशे पतनवता, मलिनात्मना शिरोरुहाणा, विशुद्धवर्णयोगो जराशौक्ल्य, विपरीतनिमित्ततां वृद्धताज्ञापनद्वारा मरणज्ञापकताम्, भजते इति शिरोरुहसमाधिर्वा बोध्यः ॥ ४ ॥

दुराचारोऽपि प्रायश्चित्तेन शुद्धश्चेत् केनाप्यनुगृह्यत इत्याह—

**पतनानन्तरं कृच्छ्रात्प्ररूढः शुद्धिमानपि ।**
**द्विजः संछाद्यते कश्चिदधरेणापि रागिणा ॥ ५ ॥**

**पतनेति ॥** द्विजातिकर्मभ्यो हानिः पतन तदनन्तरम्, कृच्छ्रात् कृच्छ्रादिप्रायश्चित्तात्, प्ररूढः पुनर्द्विजत्वापादकसस्कारैरुत्पन्नः, अत एव शुद्धिमान्, द्विजोऽपि कश्चित्, रागिणा प्रीतिमता, अधरेणापि, शास्त्राभिज्ञेनानुगृह्यत एव, तदनभिज्ञेन पामरेणापीत्यपिशब्दार्थः । स छाद्यते, पतितोऽयमिति न प्रकाश्यत इत्यर्थः । 'गुणदोषौ बुधो गृह्णन् इन्दुक्ष्वेलाविवेश्वरः । शिरसा श्लाघते पूर्व पर कण्ठे नियच्छति' इति

दोषोद्घाटनस्यानुचितत्वात्सहृदयस्येति भावः। दन्तसमाधिरत्र गम्यते, द्विजो दन्तः. 'दन्तविप्राण्डजा द्विजाः' इत्यमरः। कृच्छ्रात् अतिप्रयासात्, प्ररूढः उत्पन्नः, अधरेण अधरोष्ठेन, शेष स्पष्टम् ॥ ५ ॥

कश्चिदुदरपोषणार्थं परिशुद्ध इवाभिनयन् डाम्भिको भवति, तादृशैः 'हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्' इति सभाषणादिकमपि न कुर्यादित्यभिप्रेत्याह—

**जोषमेकपदे स्थित्वा संनिकृष्टान्क्षणाद्धसन् ।**
**बहिर्दर्शितसंशुद्धिर्बकोऽप्याहारमर्हति ॥ ६ ॥**

**जोषमिति ॥** बहिर्दर्शितसशुद्धिः स्नानादिना वैशिष्ट्यमभिनयन्नित्यर्थः, एकपदे एकचरणे, जोष मौनेनान्वितः, स्थित्वा योग कुर्वाण इव, मौनमाश्रित्यैकपादेन स्थित्वेत्यर्थः। सन्निकृष्टान् यैः कैश्चिदय महान्योगीति भक्त्या समर्पितान् उपहारान् क्षणादविलम्बेन घसन् गृह्णन्, बकोऽपि बकब्राह्मणोऽपि, आहारमर्हति आहार लब्धु योग्यो भवतीत्यर्थः। तादृशनिकृष्टवृत्त्यापि स्वोदरपूरणमेव, न परसरक्षणमित्यभिप्रायेणाहारमर्हतीत्युक्तम्। 'यस्मिन् जीवति जीवन्ति बहवः स तु जीवति। बकोऽपि कि न कुरुते चञ्चा स्वोदरपूरणम्' इत्यपिशब्देन ज्ञापितम्। अत्र बकसमाधिः; सन्निकृष्टान् मत्स्यादीन्; एकपदे युगपत्; अव्ययमेतत्; घसन् भक्षयन् ॥ ६ ॥

द्विजस्य परिशुद्धसहायस्य पण्डितस्यापि समीचीनव्यवहारः समीचीनवाक् समीचीनजीवन च विद्यते चेत् शिष्टैः सह शिष्टत्वेन

सव्यवहारो भवेत्; नो चेद्बहिष्कार्यतैवेत्यभिप्रायेणाह—

**द्विजस्य सितपक्षस्य कवेरपि निरस्यते ।**
**न हंस इति साजात्यं गतिशब्दितवृत्तिभिः ॥ ७ ॥**

**द्विजस्येति** ॥ मातृगर्भादण्डरूपेण जननं, पुनरण्डात्करचरणादिविशिष्टरूपेण जननमिति द्विजस्य, सितपक्षस्य श्वेतगरुतः, के उदके सञ्चरन् विः पक्षी कविः, तस्यापि गतिशब्दितवृत्तिभिः हंस इति साजात्यं न निरस्यते, हंसस्य हंसान्तरेण साजात्यं, गतिशब्दितवृत्तिभिः एकस्य हंसस्य यादृशी गतिर्यादृशः शब्दो यादृशी जीविका तादृशमन्यस्याप्यस्ति चेत् हंस इत्युच्यते, न द्विजत्वसितपक्षत्वकवित्वैः, द्विजस्य सितपक्षस्य कवेर्बकस्य तादृशगतिशब्दितवृत्त्यभावेन हंसत्वाभावादिति भावः । अप्रस्तुतप्रशंसालङ्कारः ॥ ७ ॥

विरुद्धाचाराणां आशीरपि न श्रेयःसाधनमित्याह—

**अव्यवस्थितवृत्तानामभिन्नश्रुतिचक्षुषाम् ।**
**अधर्मार्जितभोगानामाशीरप्यहितोचिता ॥ ८ ॥**

**अव्यवस्थितेति** ॥ "अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः समर्शिनः, युक्ता आयुक्ताः, अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन्, तथा तत्र वर्तेथाः"— इत्युपदेशमार्गं विहायाव्यवस्थितचरित्राणां; अभिन्नः जीवात्मना एकीभूतः, श्रुतिचक्षुः परमात्मा, येषां ते तथोक्ता-

स्तेषाम्, 'वेदचक्षुः सनातनः' इत्युक्तेः श्रुतिचक्षुःशब्दस्य परमात्मपरत्वम्। यद्वा अभिन्नमविचारित श्रुतिचक्षुः चक्षुःसदृशश्रुतिर्यैस्ते तथोक्तास्तेषाम्; 'श्रुतिस्मृती तु विप्राणा चक्षुषी द्वे विनिर्मिते' इत्युक्तेः श्रुतेश्चक्षुःसदृशत्व, अधर्मेण धर्मभिन्नेन काम्यकर्मणा, अनभिसहितफलो भगवत्प्रीणनैकप्रयोजनतया अनुष्ठीयमानः शास्त्रविहितो धर्मः, तद्भिन्नोऽधर्म एव, धर्मेण पापमपनुदतीत्यत्राभिसहितफलस्य धर्मस्यापि पापत्वाभिधानात्। आर्जितः भोगः स्वर्गाद्यनुभवो येषा ते तथोक्तास्तेषामाशीरपि अहितोचिता हितोचिता न भवति, श्रेयःसाधनाय न समर्थेत्यर्थः। अत्र निदर्शन—अविषु पर्वतेषु अवस्थिता वृत्ता वर्तुलाश्च तेषा, अभिन्नश्रुतिचक्षुषा चक्षुश्श्रवस्त्वात् अधर्माय परहिसायै आर्जितः भोगः शरीर येषा तेषाम्, सर्पाणामित्यर्थः। 'अहेः शरीर भोगः स्यात्' इति निघण्टुः। आशीर्दंष्ट्रापि, अहितायाः सर्पत्वस्य उचिता योग्या, 'आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयोः' इति विश्वः ॥ ८ ॥

असद्वृत्तेरारोपमात्रेणापि मान्यो न भवतीत्याह—

**दुष्टैरारोपितः कश्चिदनर्थक्रिययान्वितः।**
**असत्कारेण गृह्येत विरुद्धाकारवेदिभिः ॥ ९ ॥**

**दुष्टैरारोपित इति** ॥ दुष्टैः दुर्जनैः अनर्थक्रियया अनर्थहेतुव्यापारेणान्वितः सन्नारोपितः कश्चित् विरुद्धाकारवेदिभिः आरोपिताकारज्ञैः असत्कारेण अबहुमानेन गृह्येत, दुष्टैर्दोषयुक्तैरिन्द्रियैः, अनर्थक्रियया

कटकमकुटाद्यर्थक्रियाभावेन, 'क्वचित्तदभावेऽपि नञ्समास इष्यते' इति, अन्वितः कश्चिदारोपितो रजतादिः; विरुद्धाकारवेदिभिः शुक्तिस्वरूपज्ञैः, रजतभाववेळाया सत्त्वेन गृहीतोऽपि शुक्तित्वग्रहणदशाया, रजतादिरर्थोऽसत्कारेणासद्भावेन, गृह्येतेति । प्रातिभासिकरजतादिरत्र निदर्शनम् ॥ ९ ॥

वृत्त्या मलिनो राजा मित्रेणापि दण्ड्यो भवतीत्याह—

**तमः स्वभावमलिनं वृत्त्यालोकोज्झिताश्रयम् ।**
**दण्ड्यं मित्त्रेण राज्ञा च दृष्टदोषान्वयं विदुः ॥ १० ॥**

**तम इति ॥** वृत्त्या हेतुना आलोकेन प्रकाशेन लोकेन च, उज्झित आश्रयो यस्य तथोक्तम्, दृष्टः दोषायां रात्रौ अन्वयो यस्य तत् । दोषापदं रात्रिवाचकमव्ययमिति अमरसिंहादिभिरुक्तम्; अन्ये तु 'ततः कथाभिः समतीत्य दोषामारुह्य सैन्यैः सह पुष्पक ते' इति भट्टिप्रयोगादनव्ययमप्याहुः । अन्यत्र दृष्टः दोषाणामन्वयो यस्येति बोध्यम् । स्वभावमलिनं तमः, मित्रेण सूर्येण आप्तेन च, राज्ञा चन्द्रेण च नृपेण च, 'राजा प्रभौ नृपे चन्द्रे' इत्यमरः । दण्ड्य— निवर्त्य, अन्यत्र शिक्षणीय, विदुः । श्लेषनिबन्धनोऽयमप्रस्तुतप्रशसालकारः ॥

दुर्जनाः स्वय दुर्वृत्ताः सन्तः सद्वृत्तानेव लज्जापयन्तीत्याह —

**जातिमात्रशरणा बहिष्कृताः**
**केचिदादृतजघन्यवृत्तयः ।**

**रोषणा विपरिधाविनो मुहु-**
**र्हेपयन्ति जनमुज्झितह्रियः ॥ ११ ॥**

**जातिमात्रेति** । जातिमात्रमेव शरण रक्षणोपायो येषा ते तथोक्ताः, मात्रचा तदुचितकर्मादयो व्यवच्छिद्यन्ते, अन्यत्र जातिः चुल्ली, 'जातिर्जातिफले धात्र्या चुल्लीकपिल्लयोरपि' इति विश्वः । तदेव तन्मात्र शरण स्थान येषा तेषामित्यर्थः । बहिष्कृताः सद्भिः निरस्ताः बहिर्देश एव स्थापिताश्च; 'नित्य समासेऽनुत्तरपदस्थस्य' इति षत्वम् । आहता जघन्यवृत्तिर्नीचवृत्तिश्च येषा ते तथोक्ताः, जघन्यं चरमे शिश्ने जघन्य गर्हितेऽन्यवदिति विश्वः । रोषणाः क्रोधाविष्टा, नन्द्यादित्वाल्ल्युः । मुहुर्विशेषेण, कलहार्थ, नूतनजनाप्रवेशार्थ च अभिमुख धावन्तीति विपरिधाविनः, ऊज्झितह्रियः स्वयगर्हितवृत्तय इति, लज्जारहिताः केचिद्दुर्जनाः शुनकाश्च जन ह्रेपयन्ति; स्वदर्शनेन जनः स्वयमेव यथा लज्जायुक्तो गच्छेत् तथा कुर्वन्तीत्यर्थः । ह्री लजायामित्यस्माण्णिचि अर्तिह्री इत्यादिना पुगागमे पुगन्तलघूपधस्येति गुणे ह्रेपयन्तीति रूपम् । शुनकसाम्य प्रतीयते ॥ ११ ॥

क्षुद्रनिषिद्धविषयाभिलाषः सद्बुद्धि प्रतिक्षिपतीत्याह—

**आलोकावधि यद्वशेन सुगतिं विन्दन्ति भूतान्यसौ**
**दृष्टिस्नेहवशेन सा वितनुते वंशे भुजंगभ्रमम् ।**
**दक्षा भोगिषु केषुचिद्विषमितां दृष्टिं निहन्तुं क्षणा-**
**त्तानप्याशु विनाशयेत्क्षणरुचिः काचित्क्षणस्फूर्जथुः ॥**

**आलोकेति** ।। अलोकावधि आलोको यावति देशे वर्तते तावत्पर्यन्तम्, भूतानि यद्वशेन यद्दृष्टिवशेन, सुगति शोभनगमन विन्दन्ति । लोकावधिमभिव्याप्य स्थितानि भूतानि यत्सत्यज्ञानेन सुगति सद्गति विन्दन्ति इति प्रतीयते । असौ दृष्टिः, तत्त्वबुद्धिश्च 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इत्यमरः । स्नेहवशेन रागवशेन मण्डूकवसाद्यञ्जनविशेषेण, वशे वेणौ भुजङ्गभ्रम वितनुते भुजङ्गभ्रम जनयति; वशोरगभ्रमे मण्डूकवसाञ्जन दोष इत्याहुः । स्नेहवशेन रागवशेन, वशे जनवर्गे, भुजगभ्रम विटभ्रान्ति, 'वंशे वेणौ कुले वर्गे' इत्युभयत्रापि विश्वः, वितनुते । भोगिषु सर्पेषु, भोगवत्सु च, विष इता प्राप्तां विषमिता, विषमिश्रा; विषमीकृता, दृष्टि क्षणान्निहन्तु दक्षाः सन्तीति शेषः, तामपि दृष्टि क्षणस्फूर्जथुः क्षण क्षणमात्र स्फूर्जथुः वज्रसङ्घर्षशब्दो यस्याः सा, क्षणरुचिः विद्युत्कौचित् आशु विनाशयेत् । वज्रपतनकालिकी विद्युत् दृष्टेरत्यन्तप्रतिबन्धकेति भावः । 'टुओस्फूर्जा वज्रनिर्घोषे' इत्यस्मात् ट्वितो थुजिति अथुच् ।। १२ ।।

इति श्रीमच्छ्रीशैलकुलतिलकस्य वेङ्कटाचार्यसोमसुत सुतस्य
श्रीश्रीनिवासविदुषः कृतिषु सुभाषितनीवी-
व्याख्यायां रत्नपेटिकाख्यायां
**दुर्वृत्तपद्धतिः**
चतुर्थी ॥

# असेव्यपद्धतिः ॥



**कठिनः कृशमूलश्च दुर्लभो दक्षिणेतरः ।**
**कश्चित्कल्याणगात्रोऽपि मनुष्यैर्नोपजीव्यते ॥ १ ॥**

**कठिन इति** ॥ कठिनो निर्दयः, कृशमूलः निर्धनः, मेरुस्तु मूले कृशः उपरि विस्तीर्णश्च, दक्षिणेतरः अनुदारः, भुवो मध्यदेशवर्तित्वाद्दक्षिणदिग्भागवर्ती, पर्वतेभ्य इतरश्च, 'दक्षिणस्सरलो वामपद्मच्छन्दानुवर्तिषु' इति विश्वः । 'दक्षिणे सरलोदारः' इत्यमरः । कल्याणगात्रः शुभाकृतिरपि सुवर्णमयशरीरोऽपि, 'कल्याणमक्षये स्वर्णे कल्याण मङ्गलेऽपि च' इति विश्वः । कश्चित् पुरुषो मेरुश्च मनुष्यैर्नोपजीव्यते एकत्र व्यर्थत्वादन्यत्रासाध्यत्वादिति भावः ॥ १ ॥

**दृष्टपङ्का प्रतिपदं स्यादल्पसरसः स्थितिः ।**
**काले घनरसैर्योगेऽप्यसेव्या जीवितार्थिभिः ॥ २ ॥**

**दृष्टपङ्केति** ॥ प्रतिपद दृष्टपङ्का ग्रीष्मे दृष्टकर्दमा दृष्टदोषा च; काले वर्षाकाले कार्यकाले च; घनरसैर्योगेऽपि, अल्पसरसः स्थितिः क्षुद्रकासारस्थितिरल्पपुरुषस्थितिश्च ; जीवितार्थिभिः प्राणार्थिभिः जीवनार्थिभिश्च, असेव्या स्यात् । 'उत्तमानेव सेवेत प्राप्तकाले तु मध्यमान्' इति धृतराष्ट्रप्रजागरे उक्तत्वात् काले घनरसैर्योगेऽपीत्युक्तम् ॥

यस्य यत्सत्ता स्वरूपविरुद्धा, तयोः कदापि न सबन्ध इत्याह—

**सतः सत्त्वविहीनानां सत्तयैवापराध्यतः ।**
**कथंकारं प्रतीकारः कल्पकोटिशतैरपि ॥ ३ ॥**

**सत इति** ॥ सत्त्वविहीनाना सत्त्वगुणरहिताना तामसादीना विद्यमानतारहितानां च; सत्तया साधुभावेनैव, विद्यमानतयैव च; अपराध्यतः सतः, सत्तैव तेजसस्तिमिरस्य विरुद्धा, प्रतीकारः विरोधपरिहारः, कल्पकोटिशतैरपि, कथकार कथञ्चिदित्यर्थः. अन्येथैवं कथमित्थ सुसिद्धाप्रयोगश्चेदिति कथमित्युपपदे स्वार्थे कृञि णमुल् ॥ ३ ॥

**अपि संतापशमनाः शुद्धाः सुरभिशीतलाः ।**
**भुजंगसंगाज्जायन्ते भीषणाश्चन्दनद्रुमाः ॥ ४ ॥**

**अपीति** ॥ स्पष्टम् 'मुखेन गरळ मुञ्चन् मूले यदि महोरगः । फलसन्दोहगुरुणा तरुणा किं प्रयोजनम् ॥' 'सुपुष्पितः सारफलः फलितः स्याद्दुरासदः । अपक्वः पक्वसङ्काशः स च शीर्येत कर्हिचित्' इत्यादि स्मारितम् ॥ ४ ॥

**नीचानुसरणान्मन्ये निसर्गपरिशुद्धयोः ।**
**गतिः कुटिलतां याति गङ्गायमुनयोरपि ॥ ५ ॥**

**नीचेति** ॥ नीचानुसरणात् नीचसेवनात्, उन्नतभूमेर्निम्नदेशे प्रवहनाच्च, गतिर्बुद्धिर्गमनं च, 'गतिस्तु गमने मार्गे दशायां बुद्ध्युपाय-

योः ' इति निघण्टुः । शेप स्पष्टम् । मन्ये—इति निपातप्रतिरूपकमव्ययमिति भोजराजः । 'अधमास्तु न सेवेत य इच्छेद्भूतिमात्मनः । यदि मन्त हि सेवेत यत्रसन्त तपस्विनम् ॥' 'वासो यथा रागवश प्रयाति तथा स तेषां वशमभ्युपैति' इत्यादि स्मारितम् ॥ ५ ॥

**मित्रे भवति वैमुख्यं मैत्री दोषाकरेण च ।**
**अपि तीर्थप्रसूतानां कैरवाणा रजोभृताम् ॥ ६ ॥**

**मित्र इति** ॥ तीर्थप्रसूताना योग्यादुत्पन्नानाम्, जलावतारोत्पन्नाना च; रजोभृता रजोगुणवता, परागवता च; कैरवाणा शठाना कुमुदाना च; मित्रे सख्यौ सूर्ये च; वैमुख्य भवति दोषाकरेण पापात्मना चन्द्रेण च; मैत्री भवति । अतो न सेव्या इति भावः । नन्वसेव्यत्वे कैरवाणि न निदर्शनमिति चेन्न; रजोभृता मित्रवैमुख्यादिके निदर्शनेन समर्थिते सति तेषामसेव्यत्वसिद्धेः ॥ ६ ॥

**अपि निर्मुक्तभोगेन स्वान्तःस्थविषयेक्षया ।**
**असद्भावाय जायेत जिह्मगेन सहासिका ॥ ७ ॥**

**अपीति** ॥ निर्मुक्तस्त्यक्तो भोगो येन तेनापि ; निर्मुक्तो मुक्तकञ्चुको भोगः शरीर यस्य तेन च तथोक्तेन ; जिह्मगेन कुटिलवृत्तिना सर्पेण च ; सहासिका सहावस्थानम्, धात्वर्थनिर्देशे ण्वुल् वक्तव्य इति ण्वुल् ; स्वान्तःस्थाः मनःस्थिता अभिलषिता ये विषयाः भोग्यपदार्थाः, स्वान्ते स्वस्यान्ते समीपे, तिष्ठन्तीति तथोक्ताः ; ते च ते विषयास्तेषामीक्षया दृष्ट्या ; स्वस्य अन्तस्तिष्ठतीत्यन्तःस्थ विष यस्यास्सा

तथोक्ता तया, विषगर्भया, ईक्षया दृष्टया च, असद्भावाय दुष्टत्वाय, नाशाय; जायेत । अतो विषयभोगलम्पटेन सह वासो न कार्य इति भावः ॥ ७ ॥

**मण्डूकराविणं सर्पं गोमुखं च मृगादिनम् ।**
**न सुहृत्त्वेन मन्येत मानयन्तं च वैरिणम् ॥ ८ ॥**

**मण्डूकेति ॥** मण्डूक इव रौतीति मण्डूकरावी त, कर्तर्युपमान इति णिनिः, सर्प, सर्पजातिषु तादृशः कश्चित्सर्पोऽस्ति, गोमुख तादृशमुखयुक्तम्, मृगादिन व्याघ्रम्, व्याघ्रजातिषु तादृशः कश्चिदस्ति; त दृष्ट्वा तादृशोऽयमिति न विश्वसेदित्यर्थः । मानयन्त वैरिण च, सुहृत्त्वेन शोभनहृदयत्वेन मित्रत्वेन च, न मन्येत । 'वदन्ति वर्ण्यावर्ण्याना धर्मैक्य दीपक बुधा' इत्युक्तदीपकालकारः ॥ 'न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् । विश्वासाद्भयमुत्पन्न मूलान्यपि निकृन्तति' इति नीतिविदः ॥ ८ ॥

**घोरास्त्यक्तमिथोवैराः सौकर्यवदुपद्रवे ।**
**दण्डेनापि न भज्येरन्पापकुण्डलिमण्डलाः ॥ ९ ॥**

**घोरा इति ।** घोराः क्रूराः, पापा कुण्डलिमण्डलाः सर्पसमूहा इव तथोक्ताः; सौकर्य सुकरत्व अस्यास्तीति सौकर्यवान्, सुलभ इति यावत्; तादृशे उपद्रवे अल्पोपद्रवेऽपीत्यर्थः । सौकर्य सूकर भावः, तदेषामस्तीति तद्वन्तो वराहाः । 'सौकर्य स्यादनायासे सूकरस्य च कर्मणि' इति विश्वः । तेषामुपद्रवे तत्कर्तृकोपद्रवे, ते हि

वल्मीकानि खनन्ति, त्यक्तमिथोवैरा: सन्त: सङ्घीभूय पलायमाना: सन्त: दण्डेनापि न भज्येरन्, भग्ना न क्रियेरन्, 'स्यान्मण्डल द्वादशराजके च देशे च बिम्बे च कदम्बके च । कुष्ठप्रभेदेऽप्युपसूर्यके च भुजङ्गभेदे शुनि मण्डल: स्यात्' 'बिम्बोऽस्त्री मण्डल त्रिषु' इति पुल्लिंगता ॥

**अनाकलितमानुष्याः क्षमासंस्पर्शवर्जिताः ।**
**प्रतिबुद्धैर्न सेव्यन्ते पूर्वदेवविरोधिनः ॥ १० ॥**

**अनाकलितेति** । अनाकलितमगृहीत, मानुष्य मनुष्यकर्म, येषां ते तथोक्ता:, पिशाचव्यापारवन्त इत्यर्थ:; गुणवचनब्राह्मणादिभ्य: कर्मणि चेति ष्यञ् प्रत्यय: । ब्राह्मणादिराकृतिगण इत्युक्तम् । अनाकलितमप्राप्त मानुष्यं मनुष्यभावो मनुष्यत्व येषां ते तथोक्ता इति च । क्षमासस्पर्शेन क्षमागुणसस्पर्शेन च भूतलसस्पर्शेन च वर्जिता: ; पूर्वं देवविरोधिनो देवद्वेषिण: पश्चात् ब्राह्मणद्वेषिणश्च ; प्रतिबुद्धै: बुद्धिमद्भि: न सेव्यन्ते नाश्रीयन्ते । पूर्वदेवा राक्षसा:, तद्विरोधिनो देवा:, प्रतिबुद्धैर्मोक्षार्थिभि:, न सेव्यन्ते; 'ब्रह्माण शितिकण्ठ च याश्चान्या देवता: स्मृता: । प्रतिबुद्धा न सेवन्ते यस्मात् परिमित फलम्' इत्युक्ते: ॥ यथा मोक्षकामैरन्यदेवता न सेव्यन्ते, दूर परिह्रियन्ते, एव बुद्धिमद्भि: दुर्जना न प्राप्या इत्यर्थ: ॥ १० ॥

परिक्षीणाचारस्य श्रुतमपि विदुषांऽतिक्रमे दण्डभूयस्त्वहेतुत्वादधिकानर्थं सपादयतीति सदृष्टान्तमाह—

अमित्रे विश्वासः श्वपचकरके सौमिकरसः
कपाले गङ्गाम्भः खलपरिषदङ्के सुजनता ।
परिक्षीणाचारे श्रुतमनुपनीते च निगमः
स्वतःसिद्धां शुद्धिं त्यजति विपरीतं च फलति ॥११॥

**अमित्र इति** । श्वपचानां चण्डालानां, करकः पात्रविशेषः, तस्मिन्, सौमिकरसः देवतासमर्पितावशिष्टः सोमरसः, जनानां समूहो जनता, शोभना चासौ जनता च सुजनता, ग्रामजनबन्धुभ्यस्तलिति समूहार्थे तल्प्रत्ययः । स्पष्टमन्यत् ॥ ११ ॥

राजगृहे द्रव्यचौर्याद्यारोपणादिभिर्दण्डहेतुत्वादसेव्यमित्याह—

तरतु विवित्सयाब्धिमधिरोहतु शैलतटं
धमतु च धातुवर्गमधिगच्छतु शस्त्रमुखम् ।
तदिदमरुन्तुदं यदुत बह्ववधाय भिया
धनमदमेदुराक्षितिभृदङ्कणचङ्क्रमणम् ॥ १२ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य
कृतिषु सुभाषितनीव्यां
**असेव्यपद्धतिः**
**पञ्चमी** ॥

**तरत्विति ॥** विवित्सया धनलाभेच्छया, विद्ऌ लाभ इत्यस्मात्सन्, अब्धि तरतु, नावा देशान्तर गच्छतु; कामचारे लोट्, ततोऽनिष्ट नास्तीत्यर्थः, धातुवर्ग अश्मविकारसमूहम्, सुवर्णीकरणाय धमतु च अग्नौ पुटपाकार्थ निक्षिप्य मुखेन वायुफूत्कार करोतु, अधिगच्छतु शस्त्रमुखम्, तदपि शक्यमेवेति भावः, धनलाभाय खड्गप्रहारादिसहनात्। भिया भयेन, कुत्र को वापराधः स्यादिति भयेन बहु यथा भवति तथा अवधाय अप्रमादेन स्थित्वा, 'प्रमादोऽनवधानता' इत्यमरः। धनमदेन मेदुराणा क्षितिभृता, अङ्गणे चङ्क्रमण गृहे परिभ्रमणमित्यर्थः। यदुत तदिदमरुन्तुद दुःखावहम्। उतेति निन्दाद्योतकम्, स्तब्धोऽस्युतेतिवत् ॥ १२ ॥

इति श्रीमच्छ्रीशैलकुलतिलकस्य वेङ्कटाचार्यसोमसुत सुतस्य
श्रीश्रीनिवासविदुष कृतिषु सुभाषितनीवी-
व्याख्याया रत्नपेटिकाख्याया
**असेव्यपद्धतिः**
**पञ्चमी ॥**



# महापुरुषपद्धतिः ॥

एवमज्ञानमूलदोषविषयपद्धतीः प्रणीय अनन्तरं ज्ञानमूलगुणविषयपद्धतयः प्रणीताः । तत्र सकलगुणानामाश्रयत्वान्महापुरुषस्य महापुरुषपद्धतिः प्रथममुक्ता—

**सतामेव खपुष्पत्वं येषां यत्सदसत्त्वयोः ।**
**न जातु तस्य तत्ताभ्यामिति तेषां स विश्वदृक् ॥ १ ॥**

**सतामिति** ॥ यत्सदसत्त्वयोः यस्य महापुरुषस्य सदसत्त्वयोः, येषां सतामेव, खपुष्पत्वं अप्रसिद्धत्वम्, सर्वज्ञस्य सत्त्वे इतरजनानामप्रसिद्धत्वम्, तदसत्त्वेऽपि सतामेव खपुष्पत्वं शून्यत्वम् । सन्मार्गप्रकाशकस्य महाजनस्याभावे सत्पुरुषदौर्लभ्यमित्यर्थः । जातु कदाचिदपि तस्य महापुरुषस्य तत्ताभ्यां तेषां सतां ताभ्यां सत्त्वासत्त्वाभ्याम्, न खपुष्पत्वं नास्तीत्यर्थः । सतां सत्त्वे सर्वज्ञस्याप्रसिद्धत्वं नास्ति, असत्त्वे च शून्यत्वं नास्तीति एवं तेषां सतां मध्ये, स विश्वदृक् सर्वज्ञः । अत्र निदर्शनम्—विश्वदृक् जगच्चक्षुः सूर्यः 'कर्मसाक्षी जगच्चक्षुः' इत्युक्तेः । यत्सदसत्त्वयोः यस्य सूर्यस्य सदसत्त्वयोः, सतां नक्षत्राणामेव खपुष्पत्वं सत्त्वे खं शून्यं पुष्पं विकासो येषां तत्त्वम्, दिवा नक्षत्रसत्त्वेऽप्यस्फुरणात् । 'खमिन्द्रिये सुखे स्वर्गे शून्ये बिन्दौ विहायसि' । 'पुष्पं विकासे कुसुमे स्त्रीणां रजसि च स्मृतम्' इति

विश्वः ॥ असत्त्वे खे आकाशे पुष्पवत् स्थितत्व रात्रौ तथाभानात्, जातु कदापि तस्य सूर्यस्य तत्ताभ्या नक्षत्रसत्त्वासत्त्वाभ्यां, खपुष्पत्व नास्तीति, तेषा नक्षत्राणा मध्ये, स विश्वदृक जगच्चक्षुः । प्रकृताप्रकृतश्लेषः, तेनोपमालङ्कारो व्यज्यते ॥ १ ॥

महाजनः सता नियमनेन शिष्टाना ब्राह्मणादीना स्वसूत्रानुगुण्येन प्रवृत्ति निवृत्ति च न भिनत्तीत्याह—

**सन्नियोगेन शिष्टानां वर्णादीनां स्वसूत्रतः ।**
**प्रवृत्तिं च निवृत्तिं च न भिन्द्यात्साधुशब्दवत् ॥ २ ॥**

**सन्नियोगेनेति** ॥ स्वसूत्रतः आपस्तम्बादिसूत्रानुसारेण, व्याकरणसूत्रानुसारेण च, शिष्टाना सत्पुरुषाज्ञया शिक्षितानाम्, सहविहिताना च, वर्णादीना ब्राह्मणादीनाम्, आदिशब्देनाश्रमादीना ग्रहणम्, वनोरचेत्यादिना ङीबादिसन्नियोगेन शिष्टाना रेफादिवर्णाना च, साधुशब्दवत् साधुशब्दानामिव, तत्र तस्येति वतिप्रत्ययः । प्रवृत्ति 'शाखाधीशे शक्तियुक्ते' इति बृहस्पतिमौढ्यादिषु प्रथमोपाकर्मादिषु प्रवृत्ति शुक्रमौढ्यादिषु निवृत्ति ङीबादिना सह रेफादीना प्रवृत्ति तदभावे तदभाव 'औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः साधुत्व च इत्यादिषु औत्वाद्यन्ते उत्वनिवृत्तिमित्यादिकं, न भिन्द्यात् महापुरुषो न निरुन्ध्यात्, अपि तु प्रवर्तयेत्; अर्हार्थे लिङ् अनाशीरर्थकत्वेन सार्वधातुकत्वात् श्नम् । यासुटो ङित्वात्; 'श्नसोरल्लोपः' इत्यल्लोपः । नकारमात्रस्य श्रवणम्, सन्नियोगविशिष्टाना सह वा प्रवृत्तिः सह वा निवृत्तिरिति न्यायोऽत्रानुसन्धेयः । उपमालङ्कारः ॥ २ ॥

विष्णुभक्तिमानेव महाजन इत्यभिप्रेत्याह—

**मुक्तानुगुणवृत्तानां भजतां पावनीं गतिम् ।**
**नित्यं विष्णुपदे वृत्तिस्तारकाणां सितात्मनाम् ॥ ३ ॥**

**मुक्तेति ॥** मुक्तपुरुषानुरूपव्यापारवता, मुक्तामणय इवानुसृतगुणाना वृत्ताना वर्तुलाना च, पावनी पवित्रकारिणीम्, गतिम् उपाय प्रपत्तिम् भजता, वायुसम्बन्धिमार्गमाश्रयताञ्च । 'गतिस्तु गमने मार्गे दशाया बुद्ध्युपाययोः' इति विश्वः । सितात्मना परिशुद्धमनसा शुक्लरूपाणा च, तारकाणा ससार तारयता नक्षत्राणा च, 'कनीनिकाया नक्षत्रे तारक तारकाऽपि च इति विश्वप्रकाशे नपुसकत्वमुक्तम् । नित्य विष्णुपदे भगवत्पादे आकाशे च, वृत्तिः स्थितिः भवति ॥ ३ ॥

महाजनदर्शन पापनिवर्तकमित्याह—

**धर्मसेतुनिविष्टानामचलानां गरीयसाम् ।**
**दक्षिणोत्तरवृत्तीनां दृष्टिः पापनिवर्तिनी ॥ ४ ॥**

**धर्मेति ॥** धर्मसेतौ धर्ममर्यादाया निविष्टानाम् । 'द्वौ समुद्रौ विततावजूर्यौ पर्यावर्तेते जठरेव पादाः । तयोः पश्यन्तो अतियन्त्यन्यमपश्यन्तः सेतु नातियन्त्यन्यम्' इत्युक्तरामसेतौ निविष्टानां च; अचलानां स्थिरचित्तानाम्, दक्षिणाः समर्थाः उत्तरा उत्कृष्टा वृत्तिः वर्तन येषां ते तथोक्ताः तेषाम्, गरीयसां महात्मनाम् । अचलपक्षे उत्तरदिग्भागमुपक्रम्य दक्षिणाभिमुखं स्थितानां गरीयसां अचलाना गन्धमादनप्रभृतिमहापर्वतानां दृष्टिः पापनिवर्तिनी ॥ ४ ॥

महात्मनां सम्पत्तिः सार्थकत्वादलकारे इत्याह--

**अनङ्गीकृतकामानामनुमानार्हवर्ष्मणाम् ।**
**धृतनिर्मलतीर्थानां भूतिलेपो विभूषणम् ॥ ५ ॥**

**अनङ्गीकृतेति** ॥ अनङ्गीकृतः अस्वीकृतः कामो विषयाभिलाषो यैः तेषां शरीररहितीकृतमन्मथाना च, अनुमानार्हवर्ष्मणां अनुमानशब्देन व्याप्तिमूलकत्वात्तर्क उच्यते, सत्तर्कानुगृहीतप्रत्यक्षानुमानागमानामित्यर्थः । अन्यत्र नार्हं अनर्हं, नञर्थस्य नशब्दस्य सुप्सुपेति समासः । उमाया नार्हं उमानार्हं तन्न भवतीत्यनुमानार्हम्, उमायोग्यमित्यर्थः; वर्ष्म देहः येषां ते तथोक्ताः तेषाम्, 'वर्ष्म देहप्रमाणयोः' इत्यमरः । धृत निर्मल तीर्थ शास्त्र गङ्गा च यैः तेषां तथोक्तानाम्, 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु' इत्यमरः । भूतिलेपःसपत्सम्बन्धः भस्मलेपश्च विभूषणम् । रुद्रसाम्यमुक्तम् ॥ ५ ॥

'जानाति विश्वासयितु मनुष्यान् विज्ञातदोषेषु ददाति दण्डम् ।
जानाति *मात्रां च तथा क्षमाञ्च त तादृश श्रीर्जुषते समग्रा ॥'
इत्युक्तरीत्या महाजनस्यैव न्यायानुवर्तिनः सौख्यं भवतीत्याह—

**अनन्तख्यातिसंपन्नः शुद्धसत्त्वः सधीबलः ।**
**धत्ते बहुसुखं भोगं श्रुतिदृष्टिस्थिराशयः ॥ ६ ॥**

**अनन्तख्यातीति** ॥ अपरिमितकीर्तिसंपन्नः, अनन्त इति नामसपन्नश्च; शुद्धसत्त्वः रजस्तमोऽनभिभूतसत्त्वगुणः, अधिकबलश्च,

* मात्रां विषयाणामनित्यत्वम् ।

मधीबलः बुद्धिबलयुक्तः, श्रुतिदृष्टिः भगवान् तस्मिन् स्थिरचित्तः, यद्वा श्रुतिदृष्टिरिति व्यस्त पदम् 'श्रुतिस्मृती तु विप्राणा चक्षुषी द्वे विनिर्मिते' इत्युक्तरीत्या वेदार्थदर्शी। अन्यत्र चक्षुश्श्रवाः बहुमुख भोग सुख सहस्रमुख शरीरं च धत्ते । 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः । अत्र शेषसाम्यम् ॥ ६ ॥

महाजन एव सता सेव्य इत्याह—

**अहार्यः सर्वमध्यस्थः काञ्चनद्युतिमुद्वहन् ।**
**सत्प्रदक्षिणयोग्यत्वमुपयाति महोन्नतः ॥ ७ ॥**

**अहार्य इति** ॥ अहार्यः कुदृग्भिः प्रतारयितुमशक्यः, पर्वतश्च, 'अहार्यधरपर्वताः' इत्यमरः । सर्वमध्यस्थः अपक्षपाती सर्वभूमण्डलमध्यवर्ती च। काचन अनिर्वाच्या द्युति तेजः उद्वहन्, सुवर्णमयश्च, महोन्नतः सर्वोत्कृष्टः अत्युन्नतश्च, सतां सत्पुरुषाणां नक्षत्राणां च, प्रदक्षिणयोग्यत्वमुपयाति । अत्र मेरुपर्वतसाम्यम् ॥ ७ ॥

महात्मानो देवैरपि शिरसा प्रणम्यन्त इत्याह—

**पुण्यगन्धाः सुमनसः प्रबुद्धाः समयागमे ।**
**शिरसा परिगृह्यन्ते सादरं त्रिदशैरपि ॥ ८ ॥**

**पुण्यगन्धा इति** ॥ समयागमे सिद्धान्तशास्त्रे वसन्तादिकाले च, प्रबुद्धाः ज्ञानवन्तो विकसिताश्च, पुण्यगन्धाः पुण्यसम्बन्धवन्तः मनोहरपरिमळाश्च 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः' इति विश्वः । 'यथा वृक्षस्य सपुष्पितस्य दूराद्गन्धो वात्येव पुण्यस्य

कर्मणो दूराद्गन्धो वाति' इति श्रुतिः स्मारिता । सुमनसः ज्ञानिनः पुष्पाणि च 'सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमान्' इत्युभयत्रापि, त्रिदशैःदेवैरपि सादर शिरसा परिगृह्यन्ते 'सर्वेऽस्मै देवा बलिमावहन्ति' इति श्रुतेः । अत्र पुष्पसाम्यम् ॥

'यश्चात्मनापत्रपते भृश नरः सर्वस्य लोकस्य गुरुर्भवत्युत । अनन्ततेजाः सुमनाः समाहितः स्वतेजसा सूर्य इवावभासते ॥' इत्युक्तमहापुरुषे तदनुग्रहेण मन्दानामपि मैत्री भवतीत्याह —

**अनुकर्तुमपह्नोतुमतिवर्तितुमीक्षितुम् ।**
**अशक्ये तेजसां पत्यौ मित्रतानुमतिक्षमा ॥ ९ ॥**

**अनुकर्तुमिति** ॥ अनुकर्तु सदृशीभवितुम्, अपह्नोतु किमस्य माहात्म्यमिति निषेद्धुम्, सूर्य इति कश्चित्तेजस्वी अस्ति वेति निषेद्धु च, अतिवर्तितु निराकर्तुम् अतिलङ्घितु च; केनापि सूर्यस्य पश्चाद्भागादृष्टेरिति भावः । ईक्षितु क्षुद्राणां दर्शन कर्तु तेजसो दृष्टिप्रतिघातकत्वादवलोकितु च, अशक्ये तेजसां पत्यौ तेजस्विनि पुरुषे सूर्ये च, मित्रता सुहृत्त्व सूर्यत्व च, अनुमतेः अनुज्ञायाः क्षमा अभ्युपगमयोग्या, अनुमतिः पूर्णिमाभेदः, 'कलाहीने सानुमतिः' इत्युक्तेः । तस्याः क्षमा सूर्यकिरणानामेव चन्द्रकलापूर्तिहेतुत्वात्, 'यमादित्या अशुमाप्याययन्ति' इति श्रुतेः 'यत्रामुष्य सुधीभवन्ति किरणाः' इत्यादिप्रसिद्धेश्च । अत्र यादवः — 'तासा शतानि चत्वारि रश्मीनां वृष्टिसर्जने । शतत्रय हिमोत्सर्गे तावद्धर्मस्य सर्जने । आनन्दनाश्च मेध्यास्त्र नूतनाः

पूतना इति । शत शत वृष्णिवहास्ताः सर्वा अमृताः स्त्रियः ॥ इति ॥ ९ ॥

क्षुद्रा एव क्षुद्राणा धर्षणीया न महान्त इत्याह—

**अहितुण्डकदृष्टीनामशेषा भोगिनः पदम् ।**
**न संवर्ताग्निसारथ्ये स्थाता यन्मुखमारुतः ॥ १० ॥**

**अहीति ॥** अहितुण्डकदृष्टीना व्यालग्राहिदृष्टीनाम्, मन्त्रौषधादिव्यापाराणामित्यर्थः, 'व्यालग्राह्यहितुण्डिकः' इत्यमरः । अशेषाः शेषभिन्नाः भोगिनः सर्पाः, पद विषयः, यन्मुखमारुतः येषां सर्पाणा मुखमारुतः, सवर्ताग्निसारथ्ये प्रलयकालाग्निसहायभावे न स्थाता, ष्ठागतिनिवृत्तावित्यस्माल्लुट् । शेषमुखमारुतस्तु प्रलयकालाग्नेः सहायीभूय जगत् नाशयति, तादृश शेष कः परिभवेदिति भावः॥

अयोग्यघटनस्वभावोऽपि विधिः क्वचिद्योग्यघटनेन श्लाघनीयोऽपि भवतीत्याह—

**गरुत्मति सुपक्षतां गिरिधुरंधरे धीरता-**
**मुदन्वति गभीरताममृतदीधितौ सौम्यताम् ।**
**विवस्वति च दीप्ततां विधिरुपादधानश्चिरा-**
**दनर्घगुणचित्रितं किमपि चित्रमासूत्रयत् ॥ ११ ॥**

**गरुत्मतीति ॥** गिरिधुरधरे गिरिश्रेष्ठे । विधिः, अनर्घगुणैः सुपक्षत्वादिगुणैः, चित्रित आश्चर्यविषयीकृतम्, किमपि चित्र सज्जनाख्यालेख्यम्, आसूत्रयत् घटितवान् । एकैक सद्गुणमन्यत्र विधायाभ्यसित्वा

सज्जनाख्य चित्र निर्मितवानित्यर्थः । चित्रमिति निगीर्याध्यवसायलक्ष-णातिशयोक्तेः श्लेषमूलाभेदाध्यवसायलक्षणातिशयोक्तेरङ्गमिति तयोः सङ्करः। अप्रस्तुतविधिस्तुत्या सज्जनस्तुतिर्गम्यत इति व्याजस्तुत्यलङ्का-रः, तदङ्ग 'गरुत्मति सुपक्षतां' इत्यादिषु समालङ्कार इति सङ्करश्चेति तयोः सङ्करयोरपि सङ्करः ॥ ११ ॥

सज्जनेषु दारिद्र्यमस्ति चेत् तेषां किं न्यूनं? 'तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनम्' इति धनस्यैव वैयर्थ्यम् । ते तु, अतिचञ्चलाः सम्पदः, शान्तिसुखामृतनदीलीनाः सन्तो न श्लाघन्त इत्याह—

**प्रशस्तिं विन्दन्ति प्रशमसुखदिव्यामृतसरि-**
**त्प्रलीना धन्यानां परिषदि न संपत्तिसरितः ।**
**अमित्रोपक्षेपक्षणविगलदात्मीयपृतना-**
**दृढामर्दत्रस्यद्द्रमिडभटजङ्घाजवभृतः ॥ १२ ॥**

**इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य**
**श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य**
**कृतिषु सुभाषितनीव्यां**
**महापुरुषपद्धतिः**
**षष्ठी ॥**

**प्रशस्तिमिति** ॥ 'शरीरपतनावधिप्रभुनिषेवणापादनादबिन्धनध-नञ्जयप्रशमद धन दन्धनम् । धनञ्जयविवर्धनं धनमुदूढगोवर्धन

सुसाधनमबाधन सुमनसां समाराधनम् ॥' इत्युक्तधनं लब्धारो धन्याः, धनगण लब्धा इति यत्प्रत्ययः, तेषां परिषदि सपत्तिसरितः प्रशस्ति श्लाघन न विन्दन्तीत्यन्वयः । सम्पत्तिसरितः कीदृश्यः; अमित्रेत्यादि— अमित्रोपक्षेपणे शत्रुनिरसनोद्योगक्षण एव विगलन्त्या आत्मीयपृतनायाः स्वयूथ्यसेनाजनस्य दृढो य आमर्दः प्रबलसामन्तात् सक्षोभः तस्मात् त्रस्यन्तः शत्रव एवागता इति भ्रमेण बिभ्यतो ये द्रमिडभटाः तेषां पलायमानानां जङ्घाना यादृशो जवस्तादृशजवभृतः, द्रमिडभटा ह्यतिभरिवः पलायने महावेगवन्तः तद्वदतिशीघ्रगामिन्यः, सम्पदोऽतिचञ्चला इत्यर्थः । पुनश्च कीदृश्यः, प्रशमसुखमेव दिव्यामृतसरित् तत्र प्रलीनाः । यथा महाप्रवाहवत्यां नद्यां क्षुद्रनद्यो लीना भवन्ति तद्वत्तदीयप्रशमसुखसरिद्भिस्तिरोहिता इत्यर्थः ॥ १२ ॥

इति श्रीमच्छ्रीशैलकुलतिलकस्य वेङ्कटाचार्यसोमसुत सुतस्य
श्रीश्रीनिवासविदुषः कृतिषु सुभाषितनीवी-
व्याख्याया रत्नपेटिकाख्याया
**महापुरुषपद्धतिः**
**षष्ठी ॥**



# समचित्तपद्धतिः ॥

अथ समचित्तत्व महाजनस्य धर्म इति समचित्तपद्धतिरारभ्यते—

**पुंसः कस्य चिदास्थाने द्विजेन्द्रः सूरिसेविते ।**
**गुणवत्पक्षपातेऽपि मध्ये तिष्ठति मानभृत् ॥ १ ॥**

**पुंस इति** ॥ सूरिसेविते कस्य चित्पुसो महाप्रभोरास्थाने, गुणवत्सु पक्षपाते सत्यपि व्यवहारवेलायां, मानभृत् प्रमाणान्यनुसरन्, मध्ये तिष्ठति वादिप्रतिवादिनोर्मध्यस्थो भवति, पक्षपात्यपि मध्यस्थ इति विरोधाभासः । अत्र निदर्शनम्—कस्यचित्पुसो रङ्गनायकस्य नित्यसूरिसेविते आस्थाने, द्विजेन्द्रो गरुत्मान् गुणवत्पक्षपातेऽपि आवृत्तिमत्पक्षप्रसरणे सत्यपि मानभृत् पूजा बिभ्रत् मध्ये तिष्ठति रङ्गमण्टपमध्ये तिष्ठति । 'गुणस्त्वावृत्तिशब्दादिवेन्द्रियामुख्यतन्तुषु' इति रत्नमाला ॥ १ ॥

महाजनाःसर्वत्र समबुद्धय एव, तेषु केषाचिदादरः केषांचिदनादरश्च तत्तत्पुरुषस्वभावाद्भवतीत्याह—

**चकोरानादरं देवश्चक्रवाकस्य चादरम् ।**
**विवस्वान् नाभिसंधत्ते विश्वमेतत्प्रकाशयन् ॥ २ ॥**

**चकोरेति** ॥ देवः प्रकाशमानः, विवस्वान् सूर्यः, एतद्विश्व जगत्,

प्रकाशयन्, चकोरानादर नाभिसन्धत्ते, स्वप्रकाशनेन चन्द्रे निस्तेजस्के सति चकोराणा चन्द्रिका मास्त्विति सूर्यस्याभिसन्धिर्नास्ति, तथा चक्रवाकस्यादर च नाभिसन्धत्ते, स्वप्रकाशनेन चक्रवाकस्य स्त्रिया सभोगो भवतु इति अभिसन्धिर्नास्ति इत्यर्थः । विश्वप्रकाशनमेव तस्य कार्य, तत्तदद्दष्टानुगुण्येन आनुकूल्यानानुकूल्ये इति भावः ॥

क्षुद्राणा देशकालवशेन वैषम्ये सत्यपि महतां कदापि न वैषम्यमित्याह—

**देशकालविशेषेण विषमत्वं समत्ववत् ।**
**निशादिवसयोर्दृष्टमहोरात्रस्य न क्वचित् ॥ ३ ॥**

**देशकालेति** ॥ निशादिवसयोः देशकालविशेषेण समत्ववत् विषमत्व च दृष्टम् । निशादिवसयोः कदाचित् प्रत्येक त्रिंशद्धटिकात्मकत्ववत् देशविशेषेण लङ्कोदयादिषु उदयास्तमययोर्वैषम्य भवति । कालविशेषेण, निशायास्त्रयस्त्रिंशद्धटिकात्मकत्वम्, दिवसस्य सप्तविंशतिघटिकात्मकत्वम्, तथा दिवसस्य त्रयस्त्रिंशद्धटिकात्मकत्व निशायाः सप्तविंशतिघटिकात्मकत्वमित्यादि भवतीत्यर्थः । अह्नो रात्रेश्च समाहारः अहोरात्रः, 'अहस्सर्वैकदेशसख्यातपुण्याच्च रात्रेः' इति समासान्तोऽच्प्रत्ययः, 'रात्राह्नाहाः पुसि' इति पुल्लिगत्वम्, 'रूपरात्रिरथन्तरेषु रुत्व वाच्यम्', इति एकदेशविकृतस्यानन्यत्वाद्रात्रशब्देऽपि रुत्वम् । अहोरात्रिसमुदायस्य क्वचिदपि, कदाचिदपीत्यध्याहार्यम् । वैषम्य न दृष्टम् । सर्वत्र सर्वदा षष्टिघटिकात्मकत्वमेवेति भावः । अत्राहोरात्रो निदर्शनम् । अप्रस्तुतप्रशसालङ्कारः ॥ ३ ॥

नित्यसन्तुष्टानां महात्मनां पदार्थसत्त्वे तदभावे चैकरूपचित्ततैव, न विकारित्वमित्याह—

**प्रतिगृह्णति जीमूते प्रत्यर्पयति वा स्वयम् ।**
**अपूरणमपांपत्युः पूरणं च न लक्ष्यते ॥ ४ ॥**

**प्रतीति** ॥ जीमूते मेघे प्रतिगृह्णति समुद्रोदकं पिबति सति, प्रत्यर्पयति वर्षति सति वेत्यर्थः । 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च । उत्पत्तौ च विपत्तौ च महतामेकरूपता ॥' इत्याहुः ॥

'छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ।' इति न्यायेन महात्मानः सर्वत्र समस्वभावा इत्याह—

**छिद्रं जनयतां नीचैरच्छिद्रं बिभ्रतामपि ।**
**त्रासहीनाः सुमणयः स्वभावादुपकुर्वते ॥ ५ ॥**

**छिद्रमिति** ॥ नीचैः अधोभागे छिद्रं रन्ध्रं, नीचैः निकृष्टपुरुषैः अन्तःकलहं च, अछिद्रं हीरमण्यादिकमिति भावः । त्रासो नाम मणिदोषः । तदुक्तं बाहलेन 'रागस्त्रासश्च बिन्दुश्च रेखा च जलगर्भता । सर्वरत्नेष्वमी पञ्च दोषाः साधारणा मताः ।' इति । अन्यत्र भयं, तद्रहिताः सुमणयः स्वभावादुपकुर्वते ; 'अथवा भवतः प्रवर्तना न कथं पिष्टमियं पिनष्टि नः । स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता ।' इति श्रीहर्षः ॥ ५ ॥

समचित्तस्वभावं सर्वेऽपि प्रणमन्तीत्याह—

**अनुज्झितसुहृद्भावः सुहृदां दुर्हृदामपि ।**
**सम इत्येव भाव्योऽपि नम इत्यभिभाष्यते ॥ ६ ॥**

**अनुज्झितेति ॥** स्पष्टम् । सम इति वक्तव्ये नम इत्युच्यत इति चित्रमिति भावः ॥ ६ ॥

'दुर्जनैः सुजन द्वेष्टि' इति दुष्टैः पीड्यमानोऽपि न विकार गच्छंतीत्याह—

**मरुद्भिः पीड्यमानोऽपि संत्यक्तोऽपि दिवानिशम् ।**
**विषयस्नेहरहितो रत्नदीपः प्रकाशते ॥ ७ ॥**

**मरुद्भिरिति ॥** विषयस्नेहराहितः पात्रतैलरहितः विषयाभिलाषरहितश्च, विषयाभिलाषिणः खलु तदभावे मनोविकारः । रत्नदीपः प्रकाशते । प्राप्ते विबुधो यथा प्रकृत्यास्ते 'न विकार व्रजति महांश्चातुर्मास्येष्विवाज्यपशुशब्दः॥' इति नयमालिकायां मामकः श्लोकः ॥

**जनयत्यनले दाहं शमयत्यपि तोयदे ।**
**अभिन्नैः स्थीयते पुण्यैराश्रमारण्यपादपैः ॥ ८ ॥**

**जनयतीति ॥** अभिन्नैः एकरूपैः; स्थीयते स्थितम्, भावे लट् ॥

'लाभः श्रीमत्तर किंचिदन्यत्पथ्यतर मतम् । प्रभविष्णोर्यथा तात क्षमा सर्वत्र सर्वदा ॥ क्षमेदशक्तः सर्वस्य शक्तिमान् धर्मकारणात्' इति महात्मानः क्षमयैव सर्वे जयन्तीत्याह—

**अहार्येण कदाप्यन्यैरसंहार्येण केनचित् ।**
**तितिक्षाकवचेनैव सर्वं जयति संवृतः ॥ ९ ॥**

**अहार्येणेति** ॥ तितिक्षाकवचेन सवृत: आच्छादितः जयति सर्वमतिशेत इत्यर्थः । 'हन्ति नित्य क्षमा क्रोधमाचारो हन्त्यलक्षणम्' इति क्रोधनिवृत्तौ न कश्चिदपि वैरीति सर्वे स्वाधीना एवेति जय इति भावः । लौहकवचापेक्षया तितिक्षाकवचस्य व्यतिरेक: तत्सहकृतश्च परिणामालङ्कारः, स्वरूपेण सर्वजयासाधनत्वादारोप्यमाणस्य कवचस्य तितिक्षात्मना उपयोगात्, 'परिणाम: क्रियार्थश्चेद्विषयी विषयात्मना' इति तल्लक्षणात् ॥ ९ ॥

भगवदेकान्ती भगवद्व्यतिरेकेण किमपि नापेक्षते, अतः स एव समचित्त इत्याह—

**अमृतस्यन्दिनं कश्चित्कृष्णमेघं द्विजः स्मरन् ।**
**उदन्यया न वेशन्तमुदन्वन्तं च वीक्षते ॥ १० ॥**

**अमृतेति** ॥ कश्चित् द्विजः चातकः, अमृतस्यन्दिन उदकवर्षिण नीलमेघ स्मरन्, उदन्यया पिपासया, 'उदन्या तु पिपासा तृट् तर्षः' इत्यमरः । वेशन्त अल्पसरः, उदन्वन्त समुद्र च न वीक्षते। मोक्षप्रद कृष्ण लक्ष्यीकृत्य पुरुषार्थेप्सया ब्रह्मरुद्रादीन् लौकिकक्षुद्रानपि कश्चिद्भाग्यवान् न वीक्षत इत्यर्थः ॥ १० ॥

समचित्तस्य दुर्जनसृष्टिरप्युपकारायैवेति मतिरित्यभिप्रेत्याह—

विदधातु धाम तमसा कृतेन किं
यदि वा न वेत्ति न विधिर्न वा वयम् ।
प्रथमोपकारि चरमं यतस्ततः
प्रतियोगीनो भवति तस्य सार्थता ॥ ११ ॥

**विदधात्विति** ॥ विधिः, धाम तेजः, विदधातु सृजतु, आलोकस्य चाक्षुपप्रत्यक्षादिहेतुत्वेन लोकोपकारत्वादिति भावः। कृतेन तमसा कि तमःसृष्टया कि प्रयोजनम्, लोकप्रतिबन्धकत्वादिति भावः । एव चोद्ये उत्तरमाह—यदिवेति। पक्षान्तरे विधिर्न वेत्तीति न तत्प्रयोजन न जानातीति न, जानात्येव, न वा वय, वय वा न विद्म इति नेत्यनुषङ्गः, यतः कारणात् चरम तमः प्रथमोपकारि आलोकस्योपकारक, तमःसृष्टयभावे आलोकापेक्षाविरहात्, ततः कारणात् तस्यालोकस्य प्रतियोगिनः तमसः सार्थता भवति, तमसोऽभावे आलोकप्रयोजन न ज्ञायेत, अतः तमः सृष्टवानिति भावः । 'हस्त इव भूतिमलिनो यथा यथा लङ्घयति खलः सुजनम् । दर्पणमिव त कुरुते तथा तथा निर्मलच्छायम् ।' 'साधुपापविशुद्ध्यर्थ दुर्जनः परिकल्पितः । ग्रामवीथीविशुद्ध्यर्थ सूकरः परिकल्पितः' इत्यादि द्रष्टव्यम् ॥११॥

सर्वसमः पुरुषः सर्वेषा हृदयगम इत्याह—

विषयेष्वपि दोषगन्धहीनः
प्रलयेऽपि स्थितिमक्षयां दधानः ।

विषमेष्वपि भावयन्समत्वं
पुरुषः कोऽपि हृदि स्थितः प्रजानाम् ॥ १२ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य
कृतिषु सुभाषितनीव्यां
**समचित्तपद्धतिः**
**सप्तमी ॥**

**विषयेष्विति** ॥ विषयाभिलापरहिततया तत्प्रयुक्तरागद्वेषादिदोष-लेशहीनः, नानाविधस्थानस्थितत्वेऽपि हेयप्रतिभटतया तत्प्रयुक्तापुरु-षार्थादिरहितश्च, प्रलयेऽपि सङ्कटदशायामपि धैर्येणाक्षया स्थिति दधानः, 'एको ह वै नारायण आसीत्' इत्युक्तरीत्या प्रलयेऽपि स्थिति दधानश्च, विषमेषु विरुद्धेष्वपि समत्व भावयन् उपेक्षाबुद्धि कुर्वन् 'समोऽहं सर्वभूतेषु' इति समदृष्टि कुर्वश्च; यद्वा विषमेषु सत्त्वरजस्तमस्स्वपि समत्व प्रलयावस्थां भावयन् पुरुषः प्रजाना हृदि स्थितः समीचीन इति मनस्यनुसहितः, अन्तर्यामिरूपेण स्थितश्च । अत्र परमपुरुषसाम्यम् ॥ १२ ॥

इति श्रीमच्छ्रीशैलकुलतिलकस्य वेङ्कटाचार्यसोमसुतः सुतस्य
श्रीश्रीनिवासविदुषः कृतिषु सुभाषितनीवी-
व्याख्यायां रत्नपेटिकाख्यायां
**समचित्तपद्धतिः**
**सप्तमी ॥**

# सदाश्रितपद्धतिः ।

**सुवृत्तस्यावदातस्य कलापूर्णस्य सत्पतेः ।**
**क्षणलेशग्रहेऽपि स्यादतीर्थस्यापि तीर्थता ॥ १ ॥**

**सुवृत्तस्येति** ॥ सुवृत्तस्य सदाचारस्य, अवदातस्य रागादिदोष-हीनस्य, सत्पतेः सत्पुरुषश्रेष्ठस्य, चन्द्रस्य च; क्षणलेशेऽल्पकाले ग्रहेऽपि स्वीकारेऽपि उपरागेऽपि च, अतीर्थस्य अयोग्यस्यापि तीर्थता योग्यता भवति । महदाश्रयणादयोग्योऽपि योग्यो भवतीत्यर्थः । सर्वं गङ्गासमं तोयमिति जलमात्रस्य पुण्यतीर्थत्वं भवतीति च, 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ' इत्यमरः । 'पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम्' इत्यादिकमनुसंधेयम् ॥ १ ॥

सदाचार्यं समाश्रितस्य ज्ञानप्राप्त्या न रागादिदोषसंभव इत्याह—

**प्रतिपत्प्राप्तितः प्रागप्यापदा सत्पदाश्रितः ।**
**राजा तदितरो वापि नोपरागेण गृह्यते ॥ २ ॥**

**प्रतिपदिति** ॥ प्राक् ज्ञानलाभात् प्राक्, आपदा तापत्रयदुःखेनो-पलक्षितोऽपि इति शेषः । सत्पदाश्रितः प्रतिपत्प्राप्तितः ज्ञानप्राप्तितः प्रतिपत् ज्ञप्तिचेतनाः' इत्यमरः; राजा तदितरो वापि, उपहतो राग

उपरागः प्रादिसमासः, तेन न गृह्यते न पीड्यते। अत्र चन्द्रः सूर्यश्च निदर्शनम्। तत्र पक्षे प्राक् प्रतिपत्प्राप्तितः प्राक्, आपदा पर्वणि राहुकेतुग्रहपीडया उपलक्षितोऽपि तदनन्तर राजा चन्द्रः तदितर. सूर्यः उपरागेण राहुग्रसनेन न गृह्यते। 'उपरागो ग्रहे राहुग्रस्ते त्विन्दौ च पूष्णि च' इत्यमर. ॥ २ ॥

महाजनयोगात्पुरुषः प्रसिद्धो भवतीत्याह—

**विषमो गुणभेदेन विकारान् जनयन् क्रमात्।**
**समये महता योगादहंकारः प्रतीयते ॥ ३ ॥**

**विषम इति** ॥ गुणभेदेन सत्त्वरजस्तमोगुणभेदेन विषमः भिन्न-भिन्नप्रकृतियुक्तः, गुणसाम्यावस्था प्रधानस्य प्रलयः, वैषम्यावस्था सृष्टिरिति गुणवैषम्ययुक्तश्च, क्रमात्, महदादिविकाराश्च जनयन कुर्वन् प्रधानाख्यपदार्थ इत्यर्थः। समये भाग्यपरिपाकसमये सृष्टि-काले च, अहकारः प्रत्यगात्या, अथातोऽहकारादेश इत्यादिषु जीवे ऽहकारशब्दप्रयोगात्, अहमिति कारयति उच्चारयतीत्यहकारः। पद मिथ्याकारयत इत्यादौ कृञ इत्युच्चारणार्थत्वदर्शनात् अहकार इति तत्वविशेषश्च सन्, महता महापुरुषेण महत्तत्वेन च योगात्, प्रती-यते प्रसिद्धो भवति अहकारतत्त्वात्मना ज्ञायते चेत्यर्थः। अत्र प्रधान निदर्शनम् ॥ ३ ॥

सत्पुरुषाभिमुख्यात् स्वरूपज्ञानवान् भवतीत्याह—

**स्वदृष्टिप्रतिघातेऽपि स्वच्छे क्वचन शोभनः।**
**तत्र ह्यभिमुखः स्वात्मा ह्यादित्येव प्रकाशते ॥ ४ ॥**

**स्वदृष्टीति** ॥ स्वदृष्टिप्रतिघातेऽपि स्वस्याज्ञाने सत्यपि स्वचक्षूरश्मीना प्रसरणप्रतिबन्धेऽपि च, स्वच्छे यत्र क्वचन परिशुद्धज्ञानादिमति दर्पणे च, शोभनः प्रकाशमानः, तत्र गुरौ दर्पणे च अभिमुखः, स्वात्मा, झडित्येव शीघ्रमेव, प्रकाशते। नायनरश्मय एव दर्पणे प्रतिहतगतयः परावृत्य स्वमुख गृह्णन्तीत्याहुः। 'आभिमुख्यदशामात्रादादर्श इव सज्जनः। शीघ्र रक्तमरक्त वा गृह्णाति स्वप्रसादतः ॥' इति नीतिवेदिनः ॥ ४ ॥

***शिक्षके हरिताकारो मेरौ नीलतनुर्द्विजः ।**
**अपूर्ववर्णवद्भाति सत्यनिष्ठे च कौशिकः ॥ ५ ॥**

महदुपदेशप्राप्तं ज्ञान अज्ञाननिवृत्ति समृद्धिं च तनोतीत्याह—

**कलङ्किनि जले क्वापि सौरं प्रतिफलन्महः ।**
**तमोऽपहत्वं तनुते समृद्धिं च दिने दिने ॥ ६ ॥**

**कलङ्किनीति** ॥ कलङ्किनि अङ्कवति अपवादवत्यपि, जले उदके, चन्द्रस्य जलविकारत्वात् जडे च, प्रतिफलत् प्रविशत्, सौर सूर्यसम्बन्धि सूरिसबन्धि च, महः तेजः ज्ञान च, तमोऽपहत्व अज्ञाननिवृत्ति च दिने दिने, समृद्धिं कलावृद्धि ज्ञानवृद्धि च, तनुते। अत्र सूर्यतेजो गुरूपदिष्टज्ञानस्य निदर्शनम्। 'ज्ञानाङ्कुरं तत् परिवर्धयन्ति ये शास्त्रसत्सङ्गतितोयसेकैः। ते तु प्रबुद्धात् फलमाप्नुवन्ति मोक्षाभिध ज्ञानतरोर्दुरापम्।' इत्याद्यनुसन्धेयम् ॥ ६ ॥

---

*अस्य श्लोकस्य रत्नपेटिकाव्याख्या नोपलभ्यते ।

स्वतो बुद्धिरहितस्यान्तश्छिद्रवतः पुरुषार्थव्यापाराः हितकारिपरोपदेशेनैवेत्याह—

**स्वतश्चैतन्यहीनस्य विषमच्छिद्रभागिनः ।**
**कस्यचित्प्राज्ञमूलाः स्युः पुरुषार्थप्रवृत्तयः ॥ ७ ॥**

**स्वत इति** ॥ चैतन्यहीनस्य अचेतनस्य, विषमस्य गुणवैषम्यवतः, छिद्रभागिनः, 'सच्छिद्राण्यवयविद्रव्याणि' इति प्रसिद्धेः । कस्यचित् प्रधानस्य पुरुषार्थप्रवृत्तयः जीवार्थदेहेन्द्रियपरिणामादिव्यापाराः, प्राज्ञमूलाः परमात्ममूलाः । स्पष्टमन्यत् । अत्र प्रधान निदर्शनम् ॥ ७ ॥

महदाश्रयो महानेव भवतीत्याह—

**महान्तं पुरुषं प्राप्य कंचित्सत्त्वप्रवर्तकम् ।**
**प्रतिबुद्धो जनस्तेन परमं साम्यमश्नुते ॥ ८ ॥**

**महान्तमिति** ॥ प्रतिबुद्धो जनः विवेकी मोक्षकामश्च, 'महान प्रभुर्वै पुरुषः सत्त्वस्यैव प्रवर्तकः' 'निरञ्जनः परम साम्यमुपैति' इति श्रुती अनुसन्धेये । मुक्तपुरुषोऽत्र निदर्शनम् ॥ ८ ॥

प्रकारान्तरेणापि महाजनाश्रयेण तदन्तर्गतत्वमभिप्रेत्याह—

**सूत्रं रत्नसमावेशाच्चर्म सत्पदसंश्रयात् ।**
**तदभेदेन गृह्येत तृणमप्यस्त्रमन्त्रणात् ॥ ९ ॥**

**सूत्रमिति** ॥ किमुत पुरुष इति काव्यार्थापत्तिर्व्यज्यते, तथा वर्तितव्यमिति भावः ॥ ९ ॥

आचार्यकटाक्षलभ्यार्थो रुद्रेण चतुर्मुखेनेन्द्रेण च न लभ्यत इत्याह—

**एकयैव गुरोर्दृष्ट्या द्वाभ्यां वापि लभेत यत् ।**
**न तत्त्रिभिरष्टाभिः सहस्रेणापि कर्हिचित् ॥ १० ॥**

**एकयेति ॥** कर्हिचित् कुत्रचिदपि ॥ १० ॥

परस्परसङ्गत्या परिशुद्धानाह—

**नद्यास्तोयं त्रिदशसरिता राजनीतिः सुकीर्त्या**
**काव्यालापस्त्रियुगकथया कायवानात्मबुद्ध्या ।**
**दारप्रीतिः प्रजननधिया जन्तुहिंसा मखेन**
**प्रज्ञाहीनः परहितविदा संगतः शुद्धिमेति ॥ ११ ॥**

**नद्या इति ॥** अल्पनद्यास्तोयं गङ्गया सङ्गतं सत् शुद्धिमेतीत्यन्वयः । राजनीतिः सुकीर्त्या सङ्गता चेत् । त्रियुगकथया त्रियुगस्य भगवतः कथया, त्रीणि युगानि ज्ञानबलादियुग्मानि यस्य स तथोक्तः, अन्यथा 'काव्यालापांश्च वर्जयेत्' इति निषेधात् । अत एवोक्तं भगवता बादरायणेन 'असत्कीर्तनकान्तारपरिवर्तनपांसुलाम् । वाचं शौरिकथालापगङ्गयैव पुनीमहे ॥' इति । कायवान् शरीरी, आत्मबुद्ध्या देहादिविलक्षणात्मज्ञानेन परमात्मज्ञानेन च, 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता' इत्युक्तम् । दारेषु प्रीतिः, प्रजननधिया वंशप्रतिष्ठा भवतीति बुद्ध्या सङ्गता चेत् शुद्धिमेतीत्यन्वयः । 'धर्मप्रजासम्पत्त्यर्थं स्त्रियमुद्वहे' 'प्रजायै गृहमेधिनाम्' इति धर्मोपयोगात् ।

'यत्रानुकूल्य दपत्योस्त्रिवर्गस्तत्र वर्धते' इति ह्युक्तम्। जन्तुहिसा मखेन, अन्यथा जन्तुहिसाया निषिद्धत्वात्। प्रज्ञाहीनः स्वत उपायोन्नयनानभिज्ञः, परहितविदा आप्तेन सङ्गतः शुद्धिमेति, अनर्थान्निस्तरति। **दीपकालङ्कार.** ॥ ११ ॥

महदाश्रयणे महात्मानः परार्थैकप्रवणाः परार्थमकृत्यमपि कृत्वा परार्थ साधयन्तीत्यभिप्रेत्याह—

**विभुर्बन्धं प्राप्य व्यतनुत विमुक्तिं व्रजभुवां**
**स्वतन्त्रोऽसौ धूर्तः स्वयमजनि सूतश्च भजताम्।**
**प्रतिज्ञां स्वामोज्झत्स्वपदतटिनीसूनुसमरे**
**महद्योगात्प्रायो वहति महिमानं तदधिकम्॥१२॥**

**इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य**
**श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य**
**कृतिषु सुभाषितनीव्यां**
**सदाश्रितपद्धतिः**
**अष्टमी ॥**

**विभुरिति** ॥ पुरुपः महद्योगात् तदाश्रयणात् तदधिक महिमान वहति, प्रायः निश्चय इत्यन्वयः। अत्र निदर्शयति—उलूखले स्वय वन्ध प्राप्य यमलार्जुनवृक्षादीना व्रजभुवा विमुक्ति व्यतनुत। 'वद्ध तथा भावयता मुकुन्दमयत्नविच्छेदिनि कर्मवन्धे। तपस्विनी तत्क्रतुनीतिराद्या सव्रीडमारण्यकथासु तस्थौ' इति न केवलमर्जुन

वृक्षयोरेव, अपि तु सर्वेषामपीति भावः । प्रतिज्ञामिति । 'भक्त्या त्वनन्यया शक्यः' इति स्वप्रतिज्ञाम् । 'विष्णुवामपदाङ्गुष्ठनखस्रोतोविनिःसृते । तद्भक्तिविघ्नरूपा त्वं गङ्गे मां मोचयैनसः' इत्युक्तरीत्या गङ्गास्नानादिनापि मुक्तिं सम्पाद्य त्यक्तवानिति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १२ ॥

इति श्रीमच्छ्रीशैलकुलतिलकस्य वेङ्कटाचार्यसोमसुतः सुतस्य
श्रीश्रीनिवासविदुष कृतिषु सुभाषितनीवी-
व्याख्यायां रत्नपेटिकाख्यायां
**सदाश्रितपद्धतिः**
**अष्टमी ॥**



# नीतिमत्पद्धतिः ॥



**विक्रमाक्रान्तभुवने समे षाड्गुण्यशालिनि ।**
**भजति स्थिरतां लक्ष्मीः कस्मिंश्चित्पुरुषोत्तमे ॥ १ ॥**

**विक्रमेति** ॥ विक्रमेण पराक्रमेण पादन्यासेन च, आक्रान्तभुवने आक्रान्तलोके, समे सर्वजनसमानवृत्तौ, षाड्गुण्यशालिनि सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्यषड्गुणशालिनि, षड्गुणा एव षाड्गुण्य, स्वार्थे ष्यञ्, ज्ञानबलैश्वर्यवीर्यशक्तितेजःशालिनि च, कस्मिंश्चित् पुरुषोत्तमे पुरुषधौरेये परमपुरुषे च, लक्ष्मीः सम्पत् देवी च, 'शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिति कथ्यते' इति निघण्टुः । स्थिरता भजति । पुरुषोत्तमशब्दसमर्थन बहुधा ग्रन्थेषु कृतमिति नेह तन्यते । 'जानाति विश्वासयितु मनुष्यान् विज्ञातदोषेषु ददाति दण्डम् । जानाति मात्रां च तथा क्षमा च त तादृश श्रीर्जुषते समग्रा । मात्रा विषयाणामनित्यत्वम् 'एकया द्वौ विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु । पञ्च जित्वा विदित्वा षट् सप्त जित्वा सुखीभव ॥' बुद्ध्या धर्माथौं साद्ध्यौ विनिश्चित्य शत्रुमित्रोदासीनान् सामादि चतुर्भि रुपायैः स्वाधीनान् कुरु, ज्ञानेन्द्रियादिपञ्च जित्वा षट् सन्ध्यादीन् स्वाधीननियोज्यान् कृत्वा पानादिसप्तव्यसनानि परिहृत्य सुखी भवेत्यर्थः ॥ १ ॥

'समवेक्ष्येह धर्मार्थौ सम्भारान् योऽधिगच्छति । स वै सभृतसभारः सतत सुखमेधते ॥ यः पञ्चाभ्यन्तरान् शत्रूनविजित्य मनोमयान् । जिगीषति रिपूनन्यान् रिपवोऽभिभवन्ति तम् ॥ अनसूयार्जव शौच सन्तोषः प्रियवादिता । दमः सत्यमनायासो न भवन्ति दुरात्मनाम् ॥ धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च । धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ महानप्येकजो वृक्षो बलवान् सुप्रतिष्ठितः । प्रसह्य एव वातेन सस्कन्धो मर्दितु क्षणात् ॥ अथ ये सहिता वृक्षाः सङ्घशः सुप्रतिष्ठिताः । ते हि शीघ्रतमान् वातान् सहन्तेऽन्योन्यसश्रयात् ॥ ज्ञातिभिर्विग्रहस्तात न कर्तव्यः शुभार्थिना । सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ ॥ ज्ञातयो वर्धनीयास्तैर्य इच्छन्त्यात्मनः शुभम् । कुलवृद्धि च राजेन्द्र तस्मात् साधु समाचर' इत्युक्तरीत्या ज्ञात्यनादरणनिमित्तमन्तश्छिद्र कुल नाशयति, तस्मात् नीत्या वर्तितव्यमित्यभिप्रेत्याह —

**पार्थिवानां पदार्थानां स्वभूत्या चक्रवर्तिनाम् ।**
**जनयत्यचिराद्भेदं छिद्रेण महतान्वयः ॥ २ ॥**

**पार्थिवानामिति** ॥ पदाय राज्याय इमे पदार्थास्तेषा स्वभूत्या स्वैश्वर्येण चक्रवर्तिना अखण्डभूमण्डलाधिपतीना पार्थिवाना राज्ञा अन्वयो वशः महता छिद्रेण अन्तःकलहेन भेद जनयति, प्रभुत्व नानामुख करोति । अत्र घटादिनिदर्शन स्वभूत्या स्वीयया स्वोत्पादनार्थमपेक्षितया भूत्या भस्मना सह चक्रवर्तिनां कुलालचक्रस्थिताना पार्थिवाना पदार्थाना घटादीनामन्वयः सद्भावः, महता छिद्रेण भेद भग्नत्व जनयति ॥ २ ॥

सम्यक्परिपालने स एव लोकपालो भवतीत्याह—

**सदसन्तौ विचिन्वानः समवर्ती शमप्रदः ।**
**अपि दण्डधरो नित्यं लोकपालः सदक्षिणः ॥ ३ ॥**

**सदिति** ॥ सदसन्तौ गुणदोषसत्त्वासत्त्वे विचिन्वानः विमृशन्, समवर्ति सर्वसमानवृत्ति, शमप्रदः यथाधिकार क्षमावान् । दण्डधरोऽपि दक्षिणःसमर्थो, लोकपालः लोकरक्षकः । अत्र निदर्शन यमः स हि धर्माधर्मविचारयिता, समवर्ती शमनः कालदण्डाख्यदण्डधरः, दक्षिणो लोकपालः दक्षिणदिक्पालः । 'अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरक चाधिगच्छति' इत्यादिस्मृतिरनुसन्धेया ॥ ३ ॥

महावीरो वानरचेष्टाभिर्युद्ध कुर्वन्नपि अवसरे भातीत्याह—

**तमिस्राचारिणां योद्धा विजिताक्षो मरुत्प्रियः ।**
**कपिकृत्यैरपि स्थाने भाति वेलातिलङ्घिभिः ॥ ४ ॥**

**तमिस्रेति** ॥ तमिस्राचारिणां रोद्धा तामसाचारवतां नियन्ता, रात्रिश्चराणां हिंसकश्च, विजिताक्षः जितेन्द्रियः जिताक्षकुमारश्च, मरुतां देवानां प्रियः वायुप्रियश्च, वेलातिलङ्घिभिः मर्यादातीतैः अब्धिवृद्धिमतिक्रम्य कृतैश्च, 'वेलाब्धितीराभिवृद्धयोः' इति रत्नमाला। कपिकृत्यैरपि स्थाने युक्तसमये भाति । हनुमानत्र निदर्शनम् । अतो यथाकथंचित्पराक्रम कुर्यादिति भावः । 'निजानन्तरतः शत्रून् पञ्च पञ्चप्रयोजनान् । यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ।

'वश्येन्द्रिय जितात्मान धृतदण्ड विकारिषु । परीक्ष्यकारिण वीरमत्यन्त श्रीर्निषेवते ।' 'दान होम दैवत मङ्गलानि प्रायश्चित्त विविधान् लोकवादान् । एतानि यः कुरुते नैत्यिकानि तस्योत्थान देवता राधयन्ति' इत्यादीनि द्रष्टव्यानि ......... ..... ॥ ४ ॥

'प्रसादो निष्फलो यस्य क्रोधो यस्य निरर्थकः । न त भर्तारमिच्छन्ति षण्ड पतिमिव स्त्रियः ।' 'अपनीत सुनीतेन योऽर्थ प्रत्यानिनीषते । मतिमास्थाय सुदृढां तदकापुरुषव्रतम् ॥ आयत्या प्रतिकारज्ञः तथाग्र दृढनिश्चयः । अतीतकार्यशेषज्ञो नरोऽर्थैर्न प्रहीयते' इति राजनीतिमनुवर्तमानो न शत्रुभिर्जीयत इत्याह —

**अङ्गयुक्तः कृतास्त्रश्च कुर्वन्सम्यक्पुरोविधिम् ।**
**विजानन्सिद्धसाध्यादीन्वैरिणोऽस्त्रैर्न पीड्यते ॥ ५ ॥**

**अङ्गेति** ॥ 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि' इत्युक्ताङ्गयुक्तः, कृतास्त्रः शिक्षितधनुर्विद्यः, सम्यक्पुरोविधि कुर्वन् पुरोहितवरण कृत्वा मर्वकार्येष्वग्रतो ब्राह्मण कुर्वन्नित्यर्थः । सिद्धसाध्यादीन् एतावत्कार्य सिद्ध, एतावत्कार्य साध्य इति जानन् कृत प्रत्यवेक्षणेन कृत्यशेष निर्धारयन्नित्यर्थः । एवविधो राजा वैरिणोऽस्त्रैर्न पीड्यते । अत्र मन्त्रशास्त्रप्रक्रियया पुरश्चरण कुर्वाणो निदर्शनम् । अङ्गयुक्तः षडङ्गद्वादशाङ्गादिन्यासयुक्तः, कृतास्त्रः कृतास्त्रमन्त्रः, सिद्धसाध्यादीन् मन्त्रार्पणविधिना स्वनाम्ना सिद्धसाध्यादिस्थानानि विजानन्, पुरोविधिं कुर्वन् पुरश्चरण कुर्वन्, वैरिणोऽस्त्रैर्न पीड्यत इति ॥ ५ ॥

'निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः। अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते॥ यस्य कृत्य न जानन्ति मन्त्र वा मन्त्रित परे। कृतमेवास्य जानन्ति स वै पण्डित उच्यते॥ यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते। न किंचिदवमन्यन्ते नराः पण्डितबुद्धयः॥ आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते। हित च नाभ्यसूयन्ति पण्डिता भरतर्षभ॥ मङ्गलालम्बन योगः श्रुतमुत्थानमार्जवम्। भूतिमेतानि कुर्वन्ति सतां चाभीक्ष्णदर्शनम्॥' 'बल पञ्चविध नित्य पुरुषाणां निबोध मे। यत्तु बाहुबल नाम प्रथम बलमुच्यते॥ अमात्यलाभो भद्र ते द्वितीय बलमुच्यते। तृतीय धनलाभ च बलमाहुर्मनीषिणः॥ यत्त्वस्य सहज राजन् पितृपैतामह बलम्। अभिजातबल नाम चतुर्थ बलमुच्यते॥ यद्बलाना बल श्रेष्ठ तत्प्रजाबलमुच्यते।' इत्युक्तपञ्चविधबलशालिनः राज्ञः प्रभुमन्त्रोत्साहशक्तयः सिद्धिहेतव इत्याह—

**कामाधिकरणग्राह्यकुलादिबलशालिनः।**
**अहीनेऽपि नरेन्द्रस्य शक्तयः सिद्धिहेतवः॥ ६॥**

**कामेति**॥ काममत्यर्थ अधिकेषु रणेषु ग्राह्य कुलादिबल पितृपैतामहादिबलम्। शलति गच्छतीति तथोक्तस्य नरेन्द्रस्य, शक्तयः प्रभुमन्त्रोत्साहशक्तयः, अहीने बलवच्छत्रावपि सिद्धिहेतवः जयहेतवः। विषवैद्योऽत्र निदर्शनम्। कामाधिकरण कामबीज सकलमन्त्राणां मन्मथबीजसरस्वतीबीजश्रीबीजादियुक्तत्वात्, तेन ग्राह्य कुलादिबल, मन्त्रेषु कुलाकुलमन्त्राः सन्तीति मन्त्रवेदिनो वदन्ति,

तद्बलशालिनः नरेन्द्रस्य सर्पवैद्यस्य, शक्तयः मन्त्रौषधशक्तयः, अहीने सर्पश्रेष्ठेऽपि, सिद्धिहेतवः ग्रहणहेतवः । 'क्षत्रियं चाप्ययोद्धारं विप्रं चाप्यप्रवासिनम् । भूमिरेतौ निगिरति सर्पो बिलशयानिव । सपदा सुस्थिरमन्यो भवति स्वल्पयापि यः । कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ।' इति ॥ ६ ॥

उत्साहशक्तियुक्तः सन् धैर्येण वीर्ययुक्तः कृत्स्नं जगत् निर्वीरं कुर्यादित्याह—

**प्रद्युम्नो ह्यनिरुद्धात्मा स्वनाम्ना मानसोदयः ।**
**वीरः कश्चिद्वितन्वीत स्त्रीप्रायमखिलं जगत् ॥ ७ ॥**

**प्रद्युम्नेति** ॥ कश्चिद्वीरः, प्रद्युम्नः प्रकृष्टधनयुक्तः सन्, 'हिरण्यं द्रविणं द्युम्नम्' इत्यमरः । मानेन अभिमानेन सोदयः अभ्युदययुक्तः सन्, स्वनाम्ना स्वनामप्रसिद्ध्यान्वितः, अनिरुद्धात्मा अप्रतिहतधैर्यः सन्, 'आत्मा यत्नो धृतिर्बुद्धि' इत्यमरः । अखिलं जगत् स्त्रीप्रायं स्त्रीसदृशं पौरुषहीनं वितन्वीत । एवंविधः श्रेष्ठ इति भावः । 'प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि' इति विश्वः । अत्र मन्मथो भगवांश्च निदर्शनम् । प्रद्युम्नः कृष्णपुत्रो मन्मथः, तस्य पुत्रोऽनिरुद्धः, तस्मिन्नात्मा मनो यस्य स तथोक्तः । यद्वा अनिरुद्धरूपश्च, 'आत्मा वै पुत्रनामासि' इति श्रुतेः । स्वनाम्ना मानसोदयः, मनोभवः, वीरः कश्चित् अखिलं जगत् स्त्रीप्रायं स्त्र्यनुरागप्रचुरं वितनुते । 'वहति महिलामाद्यो वेधास्त्रयीमुखरैर्मुखैर्वरतनुतया वामो भागः शिवस्य विवर्तते । तदपि परमं तत्त्वं गोपीजनस्य वशंवदं मदनकदनैर्न

क्रोश्येरन् कथ त्वितरे जनाः ॥' 'वर्ग तृतीयमवधीरयतां विनेत' इति ह्युक्तम् । भगवत्पक्षे विः पक्षी गरुत्मान्, तेन ईरयति गच्छतीति वीरः, प्रद्युम्नः अनिरुद्धात्मा च वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धा इति व्यूहेषु परिगणितत्वात् स्वनाम्ना स्वनामस्मृत्यर्थ अध्ययनेन वसतीतिवत्, मानसोदयः भक्ताना चित्तेषु अभिव्यक्तः, अखिल जगत् 'स्त्रीप्राय पतिं विश्वस्य' इत्युक्तरीत्या स्त्रीतुल्य वितनुते भर्तृभार्यासबन्धतुल्यसम्बन्धवत्करोतीत्यर्थः । न च पतित्वमीश्वरत्वमिति वाच्यम् । आत्मेश्वरमिति पुनरुक्तेः ॥ ७ ॥

***यमेनोपक्रमे जानन्विश्वाधीशं व्यवस्थितम् ।**
**सामादिषु च तत्त्वज्ञः स न कः सिद्धिमर्हति ॥ ८ ॥**

***प्रयुक्तं मन्त्रिभिः काले भक्तिभेदपुरस्कृतम् ।**
**अपि ज्वलनवक्तॄणां साम संवननं परम् ॥ ९ ॥**

***विधौ लब्धधृतिर्नीत्या विनतानन्दनो द्विजः ।**
**नियम्यमानैः स्थानेषु भुजगैरपि भूष्यते ॥ १० ॥**

***नीतिः सती त्वयि परं परपुष्टधातुः**
**पुत्रीकृतोऽपि बलिपुष्टकुलैर्यतस्त्वम् ।**
**दूरीकृतोऽपि पुरुषैस्तत एव काले**
**कण्ठो यदेष तव पञ्चममुच्चकार ॥ ११ ॥**

---

* एतेषां चतुर्णां श्लोकाना रत्नपेटिकाव्याख्या नोपलभ्यते ॥

क्षमावन्तो महात्मानः क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान् दुर्जनान दुःखयन्तः कलावन्तः क्षमागुणवत्तया मनःकालुष्य न प्राप्स्यन्ति । क्षुद्रपुरुषोत्तरादानेन असमर्था इत्यपवादोऽपि तेषा न कर्तुं शक्यत इत्याह—

**विबुधमहिते मेरावैरावणः करटी मुहुः**
**कषतु करटं कण्डूलं स्वं क्षरन्मदकर्दमम् ।**
**भजतु च तटक्रीडां पादैर्विसन्धि रसाद्दृढं**
**न च मलिनता नापि क्षोभः कलाभृति संभृतः ॥**

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य
कृतिषु सुभाषितनीव्यां
**नीतिमत्पद्धतिः**
**नवमी ॥**

**विबुधेति ॥** विबुधमहिते देवबहुमते विद्वत्पूजिते च, मेरौ, विदुषीति गम्यते, ऐरावणः करटी, ऐरावतो गजः दुर्जनश्च, क्षरन्मदकर्दम स्रवत्कर्दमसदृशमद, कण्डूल कण्डूतियुक्तम्, कट कषतु, किं च पादैः दृढ विसन्धि विशरसन्धिबन्ध यथा भवति तथा; तटक्रीडां भजतु, कलाभृति सुवर्णधारिणि मेरौ विद्यावति च,

मलिनता मदपङ्कालेपप्रयुक्तमालिन्यम्, न च, अतिस्निग्धत्वादिति भावः। सम्भृतेत्यनुषङ्गः। क्षोभः चलनमपि न सम्भृतः, त्रिलोकाधारत्वादिति भावः ॥ १२ ॥

इति श्रीमच्छ्रीशैलकुलतिलकस्य वेङ्कटाचार्यसोमसुत सुतस्य
श्रीश्रीनिवासविदुष कृतिषु सुभाषितनीवी-
व्याख्यायां रत्नपेटिकाख्यायां

**नीतिमत्पद्धतिः।**

**नवमी ॥**



# धनधान्यपद्धतिः ॥

**आभिमुख्यदशामात्रादादर्श इव सज्जनः ।**
**शीघ्रं रक्तमरक्तं वा गृह्णाति स्वप्रसादतः ॥ १ ॥**

**आभिमुख्येति ॥** सज्जनो दाता आभिमुख्यदशामात्राद्याचकस्याभिमुखागमनमात्रेण, न तु याच्ञापर्यन्तं, याच्ञायाः परक्लेशावहत्वात्, रक्तं रागवन्तं, फलाभिलाषिणम्, अरक्तं तद्रहितं वा, लाक्षादिरागयुक्तद्रव्यं तद्रहितद्रव्यं वा, स्वप्रसादतः 'कृतज्ञतोपकर्तृत्वं भूयो दोषानभिज्ञता । एष प्रसादश्चित्तानां लक्षणज्ञैरुदाहृतः ।' इत्युक्तचित्तगुणात् स्वनैर्मल्यतश्च, आदर्श इव, गृह्णाति अनुगृह्णाति, ग्रहणसाधनं भवति च, साधने कर्तृत्वोपचारः। स्वात्मदातृत्वप्रकाशनेन स्वाश्रितेषु भगवतः 'उदाराः सर्व एवैते' इति स्वस्मृतिः । सज्जनप्रकृतिस्तादृशीति भावः । **उपमालङ्कारः** ॥ १ ॥

**अप्यनावर्जिताः स्वेन फलरागेण सन्नताः ।**
**अर्भकैरपि गृह्यन्ते साधुसन्तानशाखिनः ॥ २ ॥**

**अपीति ॥** अनावर्जिताः स्वेन स्वार्थफलाभिलाषेण अनाकृष्टा अपि अत्युन्नतत्वादनम्या अपि, फलरागेण सन्नताः परार्थफलग्रहणाभिलाषेण सन्नताः स्वयमेव सम्यङ्नताः, साधव एव सन्तानशाखिनः

अर्भकैरसमर्थैरपि गृह्यन्ते, हस्तापचेयफला भवन्ति । **श्लेषोत्थापित-ताद्रूप्यरूपकालङ्कारः** ॥ २ ॥

धिनोतीति धन, तद्धि लौकिक न भवति, तस्य 'अर्थानामार्जने दुःखम्' इत्यादिना दुःखहेतुत्वात्, अतस्तत्परित्यागेन ये आत्मतत्परास्त एव सुखिन इत्याह—

**निर्मुक्तभवनक्षेत्राः स्युः सदागतिनिर्वृताः ।**
**प्राप्ते भयविपर्यासे भोगिनः खलु भोगिनः ॥ ३ ॥**

**निर्मुक्तेति** ॥ निर्मुक्तानि त्यक्तानि, भवनानि गृहाः क्षेत्राणि च यैस्ते तथोक्ताः, 'लोकैषणायाश्च पुत्रैषणायाश्च वित्तैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरति,' 'अत्र ब्रह्म समश्नुते' 'इम च लोकममु च परित्यज्यात्मानमन्विच्छेत्' इत्यादिभिरात्मानुभवशालिन इत्यर्थः । सतामागतौ प्राप्तौ निर्वृताः, भयविपर्यासे प्राप्तेऽपि महाप्रलयादौ प्राप्तेऽपि, भोगिनः सुखवन्तः, भोगिनः स्युः खलु फणिनः स्युः खलु । **श्लेषभित्तिकाध्यवसायनिबन्धनातिशयोक्तिः** । फणिपक्षे निर्मुक्तानि मुक्तकञ्चुकानि भवनसदृशानि क्षेत्राणि शरीराणि येषा ते तथोक्ताः, सदागतिना वाताहारेण निर्वृता इत्यर्थः ॥ ३ ॥

**सर्वेषामुत्तरामाशां धनदो यः प्रतीक्षते ।**
**सत्यं मनुष्यधर्मैव स तु पुण्यजनेश्वरः ॥ ४ ॥**

**सर्वेषामिति** ॥ सर्वेषामुत्तरां उत्कृष्टां आशा स्वस्माद्धनग्रहणाभिलाष, यो वदान्यः, प्रतीक्षते परिपालयति, स मनुष्यधर्मैव, पुरु

पधर्मवान् स एव पुरुष इत्यर्थः । पुण्यजनाना ईश्वरश्च । कुबेरोऽत्र निदर्शनम् । यः कुबेरः सर्वेषामुत्तरामाशा उत्तरदिशम् परिपालयति सः, मनुष्यस्येव आचारो यस्य मनुष्यधर्मा, सप्तम्युपमानेत्यादिना समासः । धर्मादनिच्केवलादिति समासान्तोऽनिच् । भद्रमङ्गलवारादिशब्दवद्विपरीतलक्षणया पुण्यजनशब्दो राक्षसे प्रसिद्धः, तेषा ईश्वरः पुण्यजनेश्वरः । 'देहीति वदता प्रायः प्रसीदन्प्रत्युवाच सः । ललितध्वनिभिर्लक्ष्मीलीलाकमलषट्पदैः ॥' 'चातकस्त्रिचतुरान् पयः कणान् याचते जलधर पिपासया । सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥' इत्यादीनीहानुसन्धेयानि ॥ ४ ॥

**येषां हिरण्यकशिपुक्षेत्रदानकरः करः ।**
**तेषां तिर्यङ्मुखत्वेऽपि पुरुषत्वं न हीयते ॥ ५ ॥**

**येषामिति** ॥ येषा करः हस्तः हिरण्य च, कशिपु अन्नवस्त्रे 'कशिपु त्वन्नमाच्छादन द्वयम्' इत्यमरः । तच्च क्षेत्राणि च तेषा दान करोतीति दानकरः, तेषा तिर्यग्वृत्त मुख येषा ते तथोक्ताः तेषा भावः तिर्यङ्मुखत्वम्, तस्मिन्नपि पुरुषत्व श्रेष्ठत्वम्, न हीयते न त्यज्यते । अत्र नरसिंहो निदर्शनम्, स हि हिरण्यकशिपोः क्षेत्रदानं शरीरच्छेदन, करेण कृतवान्, तिर्यङ्मुखः सिंहस्य तिर्यग्जातित्वात् पुरुषश्च । 'भगवानिति शब्दोऽय तथा पुरुष इत्यपि । निरुपाधि च वर्तेते वासुदेवे सनातने, इति तस्य पुरुषधर्मपौष्कल्यात् ॥ ५ ॥

**मुख्यदानोदकक्लिन्नकरः ख्यातक्षमाधृतिः ।**
**लोकपालाश्रितः कश्चिदनाशावारणः कथम् ॥ ६ ॥**

**मुख्येति** ॥ मुख्यानां श्रेष्ठवस्तूना, यद्वा मुख्यानां ब्राह्मणानाम् , दानोदकेन क्लिन्नः आर्द्रीभूतः करो यस्य स तथोक्तः, मुखोद्भवेन मदोदकेन क्लिन्नशुण्डादण्डश्च, ख्याते प्रसिद्धे क्षमा क्षान्तिः धृतिः धैर्य च यस्य स तथोक्तः, अन्यत्र ख्याता क्षमायाः भूमेः धृतिर्धारण यस्य स इत्यर्थः । लोकपालाश्रितः कश्चित् सचिवः दिक्पालाश्रितश्च, कथमनाशावारणः अर्थिकामाशां पूरयत्येव, कथं न दिग्गज इत्यर्थः । अत्र दिग्गजो निदर्शनम् । अत्र मामकश्लोकः— 'आश्रित्य प्रभुमेक नित्य पूर्णः स्वय पर पूर्णः । कुरुते तृतीयसवन प्राप्याग्रयण यथैव षोडशिनम्' ॥ ६ ॥

**क्षोभितो विबुधैः कश्चिद्गम्भीरमधुराशयः ।**
**चन्द्ररत्नगजाश्वादिसहितां दिशति श्रियम् ॥ ७ ॥**

**क्षोभित इति** ॥ विबुधैः विद्वद्भिः क्षोभितः प्रसङ्गैः उल्लासितः, अन्यत्र विबुधैः देवैः मथितः, चन्द्रः, कर्पूरम् , अन्यत्र चन्द्रः, श्रिय सपत्तिं लक्ष्मी च । स्पष्टमन्यत् । समुद्रो निदर्शनम् ॥ ७ ॥

परमपुरुष निदर्शनीकृत्य कस्यचिन्महौदार्यमाह—

**अपुनर्देहिशब्दार्थमप्रत्युपकृतिक्षमम् ।**
**अर्थिनं कुरुते कश्चित्पुनरावृत्तिवर्जितम् ॥ ८ ॥**

**अपुनरिति** ॥ कश्चित् अर्थिन, अपुनर्देहिशब्दार्थं— देहि वितरेति शब्दस्यार्थो यस्य पुनर्नास्ति सोऽपुनर्देहिशब्दार्थः तं, भगवत्पक्षे स्वाश्रयणानन्तरं पुनर्देही देहवानिति शब्दस्यार्थो यथा न स्यात् तथा

करोतीत्यर्थः । महोपकारदानेन अर्थिनः प्रत्युपकार कर्तुमयोग्यत्वमाह— अप्रत्युपकृतिक्षममिति, स्वल्पप्रदानेन पुरुषार्थार्थं पुनरावर्तिन करोति किं? नेत्याह—पुनरावृत्तिवर्जितमिति। भगवांश्च—'न च पुनरावर्तते' 'आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इत्युक्त करोतीत्यर्थः। अपुनःप्रार्थनीयस्य प्रार्थिताधिकदायिनः । अर्थिनः प्रथमे तस्य चरमान् पर्यपूरयन्' इत्यादिकमनु सन्धेयम् ॥ ८ ॥

*वदान्यश्च कदर्यश्च गृहीतास्थिरलोभतः ।
स्वानर्थान्संचिनोत्यर्थान्परानर्थैरयोजयन् ॥ ९ ॥

*अनिःशेषितदातव्यं वदान्यदिति वादिनम् ।
नोपसर्पति सव्रीडो व्रीडाकुलवधूरिव ॥ १० ॥

'श्रद्धया देयम् ।' 'यद्दातुः सौम्यता सेय पूर्णेन्दोरकलङ्कता' 'सम्प्रीतिभोज्यान्यन्नानि,' 'प्रियवाग्दानशीलश्च वदान्यः परिकीर्तितः' इति महादानमपि प्रियोक्तिपूर्वकमेव सर्वोत्कृष्टमित्याह—

त्वचं मांसं जीवं यदपि ददुरस्थीनि पृथिवीं
श्रियं रत्नाधीशं त्रिदशतरुमैरावतमपि ।
तदेतत्प्रत्येकं मिलितमपि नालं तुलयितुं
मनस्कारोपेतां स्थिरमधुरकल्योक्तिकणिकाम् ॥

* अनयोः श्लोकयोः रत्नपेटिकाव्याख्या नोपलभ्यते ।

**त्वचमिति** ॥ त्वच कर्णः शरीराभिन्न कवच शरीरात् छित्वा ददौ। मास शिविः श्येनाय स्वोरुमास कपोतरक्षणाय ददौ। जीव कपोतः स्वसमीपागताय व्याधाय स्वभार्याप्राणान् ददौ। अस्थीनि इन्द्राय दधीचिरस्थीनि ददौ। पृथिवीं परशुरामः कश्यपाय ददौ। श्रिय रत्नाधीश त्रिदशतरु ऐरावतमपि समुद्रो ददौ। एव यदपि ददुः, तदेतत्प्रत्येक वा मिलितमपि वा, मनस्कारोपेता मनस्कारः चित्ताभोगः, 'चित्ताभोगो मनस्कारः' इत्यमरः। चित्तस्याभोगस्तात्पर्यमिति सर्वानन्दः। एकस्मिन् विषये पुनः पुनः चित्तवृत्तिराभोग इति पञ्जिका। तेनोपेता, स्थिरा कालान्तरेऽपि स्मर्तव्या, मधुरा हृदयानन्दविधायिनी, कल्या शुभात्मिका 'स्यात्कल्या तु शुभात्मिका' इत्यमरः। उक्तिकणिका सूनृतवाग्लेशमपि तुलयितुं समीकर्तु नाल न पर्याप्तम्। अतिथिविषये 'अभावे भूमिरुदक तृणानि कल्याणी वागित्येतानि वै सतोऽगारे न क्षीयन्ते' इत्यापस्तम्बः। 'सत्य ब्रूयात्प्रिय ब्रूयान्न ब्रूयात् सत्यमप्रियम्। प्रिय च नानृत ब्रूयादेष धर्मः सनातनः। 'अव्याहृत व्याहृताच्छ्रेय आहुः, सत्यं वदेद्व्याहृत तद्द्वितीयम्। प्रिय वदेद्व्याहृत तत्तृतीयम्, धर्म्यं वदेद्व्याहृत तच्चतुर्थम्।' इति महाभारते। 'चन्दन शीतल लोके चन्दनादपि चन्द्रमाः। चन्द्रचन्दनयोर्मध्ये साधुवाक्य सुशीतलम्।' इति चाटुकाराः ॥ ११ ॥

परमपुरुषो महोदारान् परार्थमेवासृजदित्याह—

**अनिर्घातं धाराधरमशमनीयं निधिरपा-**
**मकाठिन्यं चिन्तामणिमजडभूतं सुरतरुम्।**

अभित्त्वोपादाय प्रभुरपशुवृत्तिं च सुरभिं
परार्थैकस्वार्थानकृत पुरुषानादिपुरुषः ॥ १२ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य
कृतिषु सुभाषितनीव्यां
धनधान्यपद्धतिः
दशमी ॥

**अनिर्घातमिति ॥** प्रभुः सकलविलक्षणनिर्माणसमर्थः, आदिपुरुषः परार्थ एक एव स्वार्थो येषां ते तथोक्ताः तान् पुरुषान् अकृतेत्यन्वयः । कथं कृत्वा अभित्त्वा—अनिर्घातं धाराधरं, अशमनीयमपान्निधिं, अकाठिन्यं चिन्तामणिम्, अजडभूतं सुरतरुं, अपशुवृत्तिं सुरभिं च उपादाय गृहीत्वा अभित्त्वा सर्वानेकीकृत्येत्यर्थः । पूर्वसृष्टस्य धाराधरस्य वज्रनिर्घातो दोषः, अपान्निधेः शमनीयत्वं दोषः, चिन्तामणेः काठिन्यं दोषः, सुरतरोः जडत्वं दोषः, सुरभेः पशुवृत्तिर्दोष इति तान्विहाय दोषरहितैः तादृशपदार्थैरेकीकृत्य सृष्टवानित्यर्थः । अनेन निस्समाभ्यधिकमौदार्यं प्रतीयते, निर्घातशब्देनात्र परुषवाक्यं विवक्षितम्, शमनीयत्वं परार्थशून्यत्वं विवक्षितम्, काठिन्यमत्र निर्दयत्वं विवक्षितम् । जडत्वमत्र मन्दत्वं विवक्षितम्, पशुवृत्तिः पात्रापात्रविशेषानभिज्ञता विवक्षिता । अनिर्घातं धाराधरमित्यादिना

प्रसिद्धेभ्यो **व्यतिरेकः**, तदुपादानासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः। तद्भेदेऽप्यभेदातिशयोक्तिश्चेति तेषां सङ्करः ॥ १२ ॥

इति श्रीमच्छ्रीशैलकुलतिलकस्य वेङ्कटाचार्यसोमसुतः सुतस्य
श्रीश्रीनिवासविदुषः कृतिषु सुभाषितनीवी-
व्याख्यायां रत्नपेटिकाख्यायां

**धनधान्यपद्धतिः**

**दशमी ॥**





# सत्कविपद्धतिः ।

---

**अपङ्किलधियः शुद्धाः साधुमानसवृत्तयः ।**
**वमन्ति श्रुतिजीवातुं ध्वनिं नवरसास्पदम् ॥ १ ॥**

**अपङ्किलेति** ॥ अपङ्किलधियः रागमोहादिकालुष्यरहितबुद्धयः, अनेन वक्तृवैलक्षण्येनोपादेयत्वसिद्धिः, अन्यत्र कर्दमवत्सु क्षुद्रसरस्स्वपेक्षारहिताः, शुद्धाः शुचयः धवलाश्च, साधुमानसे समीचीनमनोव्यापारे भगवद्भक्त्यादौ मानससरसि च वृत्तिर्येषां ते तथोक्ताः, नवरसास्पदं शृङ्गारादिनवरसाभिव्यञ्जकम् नूतनोदकपानसम्भवं च, श्रुतिजीवातु वेदमूलम् श्रोत्रानन्दकरं च, ध्वनिं वमन्ति प्रकटयन्ति, गौणवृत्त्याश्रयणाद्वमन्ति इत्यस्य न ग्राम्यता । तदुक्तम् 'निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयात् । अतिसुन्दरमन्यत्र ग्राम्यकक्ष्यां विगाहते' इति । हंससाम्यं गम्यते, 'मधुरं मधु पीयूषं तस्मात्तस्मात्कवेर्वचः ॥'

महानायकमेव स्वकाव्यस्य विषयं कुर्वन् प्रतिभान्वितो महाकविर्भवतीत्याह—

**महापुरुषबद्धात्मा सर्गादिप्रथितोदयः ।**
**पश्यावदातया वाचा सेव्यते चतुराननः ॥ २ ॥**

**महापुरुषेति** ॥ चतुरं रसभावादिबन्धुरकाव्यनिर्माणचतुरम् आननं वक्त्रं यस्य स तथोक्तः; 'यद्धि मनसा ध्यायति, तद्वाचा वदति'

इति बुद्धिस्थ चातुर्य तदनुशब्दाभिलापिनि आनने आरोपितम्, चतुर्मुखश्च, महापुरुषे धीरोदात्तादिनायके परमपुरुषे च बद्धः वर्णयितृत्वेन सम्बद्धः आत्मा मनो यस्य स तथोक्तः, परमपुरुषध्यानासक्तमनाश्च; सर्गादिषु सर्गकाण्डसमुच्छ्वासादिसंज्ञकपरिच्छेदेषु विषये प्रथितः प्रसिद्धः उदयः बुद्धिप्रतिभादिरूपाभ्युदयो यस्य स तथोक्तः, सृष्ट्यादिविषये प्रसिद्धोत्पत्तिश्च। अवदातया शुद्धया दोषरहितयेति यावत्, धवलया च वाचा वाग्देव्या च सेव्यते। पश्य मनसा विचारयेत्यर्थः। चतुर्मुखो निदर्शनम् ॥ २ ॥

सत्यवान् महाकविर्दुर्लभ इत्याह—

**विशुद्धवर्णललिता गुणालंकारशालिनी।**
**सरसा भारती यस्य स सत्ये कः प्रतिष्ठितः ॥ ३ ॥**

**विशुद्धेति** ॥ विशुद्धवर्णललिता रसानुगुण्येन असंयुक्तकोमलवर्णादिमनोहरा, शुभ्रवर्णा च, गुणालङ्कारशालिनी प्रसादमाधुर्यादिगुणैरुपमानुप्रासाद्यलङ्कारैश्च शालिनी। अन्यत्र सौन्दर्यादिगुणैः कटककेयूराद्यलङ्कारैश्च शालिनी, सरसा रसाभिव्यञ्जका भर्तरि सानुरागा च, भारती वाक् वाग्देवता च यस्य सः, सत्ये कः प्रतिष्ठितः कोऽपि, भगवानेव यस्य स्तुतेर्विषयः। सत्ये ब्रह्मणि कः कोऽपि प्रतिष्ठितः। 'इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात्। मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात्' 'वितथा वेदपान्थाना यत्र मायगृहा गतिः।' 'यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः' इत्युक्त-

रीत्या परमपुरुषमहिमवर्णनप्रवृत्तस्य सत्यप्रतिष्ठितत्वस्य सभवान्न व्यतिरेके तात्पर्यम् । अपि तु दौर्लभ्य एव तात्पर्यम्; 'स महात्मा सुदुर्लभः' इतिवत् । अन्यत्र सत्ये सत्यलोके कः ब्रह्मा प्रतिष्ठित इत्यर्थः । चतुर्मुखोऽत्र निदर्शनम् ॥ ३ ॥

'वार्ता च कौतुककरी विमला च विद्या लोकोत्तरः परिमलश्च कुरङ्गनाभेः । तैलस्य बिन्दुरिव वारिणि दुर्निवारमेतत्त्रय प्रसरति स्वयमेव लोके ॥' इत्युक्तरीत्या परिशुद्धविद्या समुद्रपरिवेष्टितभूमण्डले स्वयमेव प्रसरतीत्याह—

**कुतश्चिदचलस्थानात्प्रयान्ती सागरान्तिकम् ।**
**दृश्यादृश्यतनुर्भाति कृत्यभीष्टा सरस्वती ॥ ४ ॥**

**कुत इति ॥** कुतश्चिदचलस्थानात् देशान्तर असञ्चरतोऽपि कवेरित्यर्थः पर्वतस्थानाच्च, सागरान्तिक प्रयान्ती समुद्रपर्यन्त गच्छन्ती दृश्यादृश्यतनुः क्वचिद्गूढव्यङ्ग्याकृतिः क्वचिदगूढव्यङ्ग्याकृतिः, यद्वा पण्डितेषु दृश्यतनुः अपण्डितेषु अदृश्यतनुः, अन्यत्र सरस्वत्याख्यनद्या गुप्तगामित्वात् दृश्यादृश्यतनुत्व प्रसिद्धम् । कृतिषु प्रबन्धेषु विषये अभीष्टा कृतीना विदुषां स्नानाद्यर्थमभीष्टा च, सरस्वती विद्या वेगाख्यनदी च भाति, नदी निदर्शनम् ॥ ४ ॥

विदुषा सूक्तयो मुक्तात्मता सपादयन्त्यः श्रोत्रानन्दाय भवन्तीत्याह—

**प्रभूतोदितमुक्ताभिर्भूयते सूक्तिशुक्तिभिः ।**
**सुदृशां कर्णपूराय तादृक्त्वं फलभेदतः ॥ ५ ॥**

**प्रभूतेति** ॥ प्रभूत अधिक यथा भवति तथा उदिता आविर्भूता मुक्ता याभ्यस्ताभ्य: सूक्तिशुक्तिभिः, शुक्तिसदृशसूक्तिभिः सूक्तिसदृशशुक्तिभिश्च, सुदृशा विदुषां कर्णपूराय श्रोत्रानन्दाय, स्त्रीणां कर्णावतसाय च भूयते भावे लट् । श्रोत्रानन्दावहत्व कथ? कथ वा कर्णावतसार्थत्व शुक्तीनामित्यत्राह 'तादृक्त्व फलभेदतः' इति, अर्थभेदवैचित्र्यात् गर्भीकृतमौक्तिकाना शुक्तीनां भेदनाच्च । शुक्तिसाम्यम् ॥ ५ ॥

'सा कविता सा वनिता यस्याः श्रवणेन दर्शनेनापि । कविहृदय युवहृदयं सरल तरल च सत्वर भवति' इत्युक्तरीत्या सतां सूक्तिर्विरुद्ध विचारितापि स्वा शोभामपरित्यजन्ती भगवदानन्दावहेत्याह—

**प्रतीपमुपमृष्टापि स्वामभिख्यां न मुञ्चति ।**
**कालिकेव सतां सूक्तिस्तादृशद्युतिनन्दनी ॥ ६ ॥**

**प्रतीपमिति** ॥ प्रतीप प्रतिकूल, उपमृष्टापि विचारितापि, कालिकेव मेघपङ्क्तिरिव, स्वामभिख्या शोभा सूक्तिरित्याख्या वा नमुञ्चती अत्यजन्ती, मेघपङ्क्तिरपि प्रतीप प्रतिलोम उपमृष्टापि करतलादिना घट्टितापि स्वा शोभा न मुञ्चति, तद्वदित्यर्थः ; सतां सूक्तिः तादृशद्युतिः भगवान् तस्य नन्दनी सन्तोषावहा भवति । नमुञ्चतीत्यत्र आच्छीनद्योर्नुमित्यस्य वैकल्पिकत्वान्नुमभावः, नशब्दस्य सुप्सुपेति समासः ॥ ६ ॥

'युक्तियुक्त वचो ग्राह्य बालादपि सुभाषितम्' इति न्यायेन पशुपालवाक्यमप्यर्थवच्चेद्ग्राह्यमित्याह—

**अपार्थेतरयुक्तानां व्याससङ्ग्रहशालिनाम् ।**
**अपि गोपालगीतानां निवेशो निगमादिषु ॥ ७ ॥**

**अपार्थेति** ॥ अपार्थेतरः सदर्थः अर्जुनश्च, तेन युक्तानाम्, व्यासो विस्तरः सग्रहः सङ्क्षेपः तेन शालिनाम्, ग्रन्थकारिणामेष स्वभावः, 'यत्समासव्यासधारणम्' इति । व्यासस्य बादरायणस्य सग्रहेण ग्रथनेन शालिना च; गोपालगीताना पशुपालश्लोकानामपि श्रीकृष्णोक्तानामपि; निगमादिषु निवेशः प्रमाणेषु ग्रहो भवति, गीतोपनिषदिति वेदान्ततुल्यत्वेन ग्रहो भवतीत्यर्थः । गीतोपनिषन्निदर्शनम् ॥ ७ ॥

'काव्य यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥' इति काव्यस्यानेकपुरुषार्थसाधनत्वात् लोहितपायिगोर्पीडन्यायेन केनचित्कुकविना सरसकविशब्द न्यक्कृत्य क्रियमाणः शब्दाडम्बरो वृथेत्याह—

**जलाशयस्य घोषेण जातलौल्यस्य भूयसा ।**
**कविशब्दं तिरोधाय कश्चिदर्थो न साध्यते ॥ ८ ॥**

**जलाशयस्येति** ॥ जात लौल्य अह कविरिति चापल्य वाय्वादिना तरलत्व च यस्य तथोक्तस्य ; जलाशयस्य मन्दबुद्धेः लडयोरभेदात्, सरसश्च; भूयसा घोषेण कवेः सत्कवेः शब्द, के जले विः पक्षी हसः तस्य शब्द तिरोधाय परैरश्रुत कृत्वा, कश्चिदप्यर्थो न साध्यते, कविशब्दकृतमाधुर्यादिक स्वय न बिभर्ति—इत्यर्थः ॥ ८ ॥

'मणिना वलय वलयेन मणिर्मणिना वलयेन विभाति करः ।

कविना च विभुर्विभुना च कविः कविना विभुना च विभाति सभा।'
'अपत्य च कवित्व च द्वयमेव शुभास्पदम्' इत्युक्तरीत्या कविताभाग्यवानेन प्रकाशत इत्याह—

**सदा नवोक्तिमहितः प्रतिरुन्धन्प्रतीपगान्।**
**प्रथितः काव्यनाम्नापि कविरेकः प्रकाशते॥ ९॥**

**सदेति**॥ सदा नवोक्त्या 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा विदुः' इत्युक्तप्रतिभया विचित्रापूर्वशब्दार्थयुक्तरचनया, महितः सर्वैः पूजितः, दानवाना उक्तिभिः सह वर्तत इति सदानवोक्तिः स चासौ महितश्चेति, शुक्रपक्षे खञ्जकुब्जवद्विशेषणसमासः। प्रतीपगान् प्रतीपवर्तिनः कुकवीन् प्रतिरुन्धन् प्रतिकूलवर्तिग्रहान् प्रतिरुन्धश्च, शुक्रदृष्टेस्तद्दोषनिवर्तकत्वादिति भावः, काव्यनाम्नापि प्रथितः भारविः माघ इत्यादिकाव्यनामात्मनापि स्वनामप्रसिद्धिमान्, अपिशब्देन कालिदास इत्यादि केवलनाम्ना च प्रसिद्धः, 'शुक्रो दैत्यगुरुः काव्यः' इति काव्यनाम्ना च प्रथित इति च; एकः मुख्यः कविः आदिर्वर्णयिता द्वितीयः शुक्रश्च, प्रकाशते दीप्यते। शुक्रो निदर्शनम्॥ ९॥

कश्चिन्महाकविः स्वयमेकदेशस्थितोऽपि कीर्त्या सर्वदिग्व्याप्तो भवतीत्याह—

**पूर्वकल्पप्रकारेण पुरुषार्थप्रवृत्तया।**
**विचित्रसृष्ट्या विहरन्व्याप्तः कश्चिन्महानपि॥ १०॥**

**पूर्वकल्पेति**॥ 'सवाग्विसर्गो जनताघविप्लवो यस्मिन् प्रति-

श्लोकमबद्धमस्त्यपि । नामान्यनन्तस्य यशोऽङ्कितानि गृह्णन्ति गायन्ति गृणन्ति साधवः ॥ इति सत्कवितायाः भगवच्चरित्रवर्णने पापनिवर्तकत्वात् सर्वपुरुषार्थहेतुत्वात् महानपि धनादिना अधिकोऽपि कश्चित्परमपुरुष इति 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैव प्रवर्तकः ।' इति श्रुतिप्रसिद्धेः । पूर्वकल्पप्रकारेण आदिकवीनां वाल्मीकिप्रभृतीनां निर्माणप्रकारेण 'धाता यथा पूर्वमकल्पयत्' इति श्रुतिनिर्दिष्टपूर्वब्रह्मकल्पप्रकारेण च, पुरुषार्थप्रवृत्तया, 'यशसेऽर्थकृते इत्युक्तप्रयोजनार्थं प्रवृत्तया, पुरुषस्य करणकलेबरादिनिर्माणार्थं प्रवृत्तया च, विचित्रसृष्ट्या रसभाववधुरशब्दार्थचमत्कारकल्पनया विहरन्, व्याप्तकीर्त्या सर्वत्र व्याप्तः, स्वरूपेण सर्वत्र व्याप्तश्च । परमपुरुषो निदर्शनम् ॥

क्षीरसमुद्रोत्पन्नसुधेव सत्कविसूक्तिरास्वादनीया भवतीत्याह——

**मतिमन्थजवेन लब्धवर्णा**
**प्रतिपन्ना विबुधैरनन्यभक्तैः ।**
**सुकवेरनघा नयस्य सूक्तिः**
**स्वदते दुग्धपयोनिधेः सुधेव ॥ ११ ॥**

**मतिमन्थेति** ॥ अनन्यभक्तैः भगवद्भक्तैः अमृतातिरिक्तान्नरहितैश्च, विबुधैः विद्वद्भिः देवैश्च, मतिमन्थजवेन मन्थसदृशबुद्ध्यतिशयेन मतिसदृशमन्थवेगेन च, प्रतिपन्ना लब्धा वर्णा यस्याः सा तथोक्ता, लब्धः वर्णः शुभ्रवर्णो यस्याः सा तथोक्ता च; अनघा दोषरहिता दुःखविरोधिनी च; सुकवेर्नयस्य सूक्तिः नीतिसम्बन्धिनी सूक्तिः, दुग्धपयोनिधेः सुधेव स्वदते रोचते ॥ ११ ॥

भाग्यवशेन स्वयमेव कस्मिंश्चिज्जने वाल्मीकाविव कविता प्रसरति चेत्सैव कविता, न यत्नसाध्या, तादृशी च क्वचिद्भवतीत्याह—

**मनुष्यासम्प्राचेतसपरिषदर्हा क्वचिदियं**
**सुधासिक्ता सूक्तिः स्वयमुदयमन्विच्छति जने ।**
**निरुन्ध्युः के विन्ध्याचलविकटसंध्यानटजटा-**
**परिभ्रान्ता पङ्गोरुपरि यदि गङ्गा निपतति ॥**

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य
कृतिषु सुभाषितनीव्यां
सत्कविपद्धतिः
एकादशी ॥

**मनुष्यासेति ॥** मनुष्यासप्राचेतसपरिषदर्हा सुधासिक्तारसभरिता सूक्तिः, जने पामरेऽपि स्वयमुदयमाविर्भावं अन्विच्छति अपेक्षते, तत्र निदर्शनमाह— निरुन्ध्युरिति । विन्ध्याचलवद्विकटा निम्नोन्नताः सन्ध्यानटस्य शिवस्य या जटास्तत्र परिभ्रान्ता गङ्गा पङ्गोरुपरि यदि निपतति के निरुन्धुः, न केऽपीत्यर्थः ॥ १२ ॥

इति श्रीमच्छ्रीशैलकुलतिलकस्य वेङ्कटाचार्यसोमसुत. सुतस्य
श्रीश्रीनिवासविदुषः कृतिषु सुभाषितनीवी-
व्याख्यायां रत्नपेटिकाख्यायां
सत्कविपद्धतिः
एकादशी ॥

# परीक्षितपद्धतिः ॥

‘सहसा विदधीत न क्रियामविवेकः परमापदा पदम्। वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः’ इति नीतिमनुसृत्य परीक्षितपद्धतिमाह—

**काकानां कोकिलानां च सीमाभेदः कथं भवेत्।**
**यदि विश्वसृजा साक्षं न कृता कर्णशष्कुली ॥ १ ॥**

**काकानामिति ॥** विश्वसृजा ब्रह्मणा अक्षिभ्यां सहितं यथा भवति तथा साक्षं, ‘तेन सहेति तुल्ययोगे’ इति बहुव्रीहिः; बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षजिति षच्। कर्णशष्कुली कर्णपाशी, न कृता यदि, ‘शष्कुली कर्णपाश्यपि’ इत्यमरः। काकानां कोकिलानां च सीमायाः मर्यादायाः, भेदः कथं भवेत्; कर्णसृष्ट्यभावे काककोकिलभेदो न जायेत, अक्षिसृष्ट्या काककोकिलसाम्यमेव गृहीतम्, तत्र तद्ध्वनिग्राहिकर्णसृष्ट्या अयं काकः अयं कोकिल इति ज्ञायत इत्यर्थः। परमपुरुषेणैव लोकहितार्थं समीचीनप्रमाणानि सम्पादितानि, ततश्चापातज्ञानेन सदसद्विशेषाग्रहेऽपि विशेषग्राहकैः प्रमाणैः सम्यक् परीक्ष्य सद्वस्तूपाददीत, असद्वस्तु त्यजेदिति भावः ॥ १ ॥

‘ये तत्र ब्राह्मणाः सम्मर्शिनः, युक्ता आयुक्ताः, अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन्, तथा तत्र वर्तेथाः’ इत्युक्तरीत्या वृत्तादि-

धर्मसन्देहे वृद्धान् पृच्छेत्, तेऽपि तत्र सम्यगुपदिशन्तीत्यभिप्रेत्याह—

**छन्दःप्रत्ययशुद्धात्मा पश्यन्यतिगणस्थितीः ।**
**वर्णादिनियतं वृत्तं नियुङ्क्ते गौरवादिवित् ॥ २ ॥**

**छन्द इति ॥** छन्दःप्रत्ययेन वेदार्थज्ञानेन छन्दःशास्त्रज्ञानेन च, शुद्धः सन्देहरहितः आत्मा मनो यस्य स तथोक्तः, यतीना व्रतिना गणस्थितीः, पश्यन् विचारयन्, 'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यमरः । 'यतिर्विच्छेदसज्ञितः' इत्युक्तयतिगणस्थितीश्च; अत्र विच्छेदाभावो दोषः, अत्र विच्छेदाभावो गुण इत्यादिस्थितीश्च पश्यन्, गौरवादिवित् गुरुभाव प्राप्तवान्, वर्णाना गुरुत्वलघुत्वाद्यभिज्ञश्च, वर्णादिनियत ब्राह्मणादिवर्णानियत अक्षरगणादिनियत च, वृत्त आचार आर्यादिवृत्त च, नियुङ्क्ते उपदिशति, अतो वृद्धान् दृष्ट्वा अनुतिष्ठेदिति भावः ॥ २ ॥

सदसद्विवेकः परिशुद्धमुखादवगन्तव्य इत्याह—

**सुवर्णमपि दुर्वर्णं युक्त्या दर्शयितुं क्वचित् ।**
**व्यनक्ति शुद्धिं सहसा शुचिरेकः स्वतैक्ष्ण्यतः ॥ ३ ॥**

**सुवर्णमपीति ॥** एकः शुचिः अभिजनविद्यावृत्तैः शुद्धः वह्निश्च, 'शुचिरप्पित्तम्' इत्यमरः । क्वचित् पुरुषे हिरण्यादौ च, युक्त्या स्वयोगेन, सुवर्ण शोभनब्राह्मणादिजाति दुर्वर्ण शूद्रादिजाति च, शूद्रादिष्वपि केषु चिद्यज्ञोपवीतादिधारणसभवात्, सुवर्ण शोभनवर्ण दुर्वर्ण च, दर्शयितु स्वतैक्ष्ण्यतः स्वतेजोमहिम्ना, सहसा शुद्धि शोभन

व्यनक्ति प्रकटयति; यथा अग्निमुखतो हिरण्यरजतादिशुद्धिर्ज्ञायते तथा परिशुद्धयोगात् दुष्टादुष्टस्वरूपे ज्ञायेते इति भावः । 'सुवर्णमपि दुर्वर्णं दर्शयितुमिति विरोधस्यार्थान्तरेणाभासितत्वात् **विरोधाभासः** ॥

महात्मसु दुर्जनेनारोपितं दोषं केऽपि न गृह्णन्तीत्याह—

**स्वच्छस्वादुविशुद्धानां स्रोतसां कलशोदधेः ।**
**दोषं केऽपि न मृष्यन्ति दुष्टजिह्मेन कल्पितम् ॥ ४ ॥**

**स्वच्छेति** ॥ दुष्टजिह्मेन दुष्टसर्पेण वासुकिना कल्पितम्, कलशोदधेः क्षीरसमुद्रस्य, स्वच्छस्वादुविशुद्धानां निर्मलमधुरशुभ्राणाम्, स्रोतसाम्, दोषं कालकूटविषम्, केऽपि न मृष्यन्ति न सहन्ते । एवं सत्सु दुष्टैरारोपितं दोषं केऽपि नाङ्गीकुर्वन्तीत्यर्थः ॥ ४ ॥

सतामिह लोके जातं सत्त्वगुणसंस्थापनं योग्यम्, दुष्टानां तु सत्त्वसंस्थापनं अन्यदित्याह—

**इहैव भुवने जातं सत्त्वसंस्थापनं क्षमम् ।**
**गृह्यते किमपि स्वस्थैरन्यत्किमपि जिह्मगैः ॥ ५ ॥**

**इहेति** ॥ इहैव भुवने लोके, जातं संभाविनम्, सत्त्वसंस्थापनं सत्त्वगुणवर्धनम्, क्षमं हितम्, 'आहारशुद्धौ सत्वशुद्धिः' इत्युक्तप्रकारेण सत्त्ववृद्धिः सम्पादनीयेत्यर्थः । 'न सत्त्वादारोग्यम्' इति सत्त्वगुणस्यैवात्मनो भवरोगनिवर्तनेनारोगतासम्पादकत्वात् 'इहैव नरकव्याधिचिकित्सां न करोति चेत् । अनौषधमयं प्राप्य सरुजः किं करिष्यति' इति ह्युक्तम् । स्वस्थैः पारलौकिकदुःखमजानद्भिः इद-

मेव भोग्यमिति मन्वानैः जिह्मगैः दुष्टैस्तु अन्यत्किमपि, सत्त्वसंस्थापनमित्यनुषज्यते, सत्त्वं सत्त्वगुणः संस्थाप्यते नाश्यते बलवताऽनेनेति सत्त्वसंस्थापनं रजस्तमोवृद्धिकरं सत्त्वनाशकं वस्तु, गृह्यते सेव्यते, विरुद्धविषयमदिरास्वादः क्रियत इत्यर्थः। अत्र निदर्शनं सर्पाः। जिह्मगैः सर्पैः पातालस्वर्गस्थैः अन्यत्किमपि सत्त्वसंस्थापनं नागसहस्रबलकरं रसं पीयते, तत्तेषां स्वर्गस्थत्वात्सुखावहं एतेषां स्वस्थत्वभ्रान्त्या अन्यद्गृह्यते, तद्दुःखावहमिति भावः। नागलोके तादृशरसोऽस्तीति भारते भीमसेनपातालगमने वर्णितम्। संपूर्वः स्थाधातुः सम्यक्स्थापने नाशने च वर्तते ॥ ५ ॥

दुर्वासनाबलवशात् दुष्टाः सच्छास्त्रं परिहरन्ति चेन्न शास्त्रस्य हानिः, किंतु त एव अज्ञानिन इत्यभिप्रेत्याह—

**कलकण्ठगलास्वाद्ये कामस्यास्त्रे निजाङ्कुरे।**
**निम्बवृत्तिभिरुद्गीर्णे न चूतः परितप्यते ॥ ६ ॥**

**कलकण्ठेति** ॥ कलकण्ठगलास्वाद्ये कोकिलकण्ठास्वादनीये कल्मषनिवर्तनेन तदीयमधुरध्वनिहेतौ, अनेन पापनिवर्तनेन समीचीनज्ञानोत्पत्तिहेताविति गम्यते। कामस्यास्त्रे विषयसुखसाधने, अत्रापि भगवत्कैङ्कर्यादिसुखहेताविति गम्यते। निजाङ्कुरे स्वकीयपल्लवे, निम्बवृत्तिभिरुष्ट्रैः उद्गीर्णे निम्बसंयोगादर्थादास्यप्रविष्टे वान्ते सति चूतो न परितप्यते परितापं नोपैति, जनानां परितापविषयो न भवति, उष्ट्रा एव निन्द्यन्त इति भावः ॥ तप सन्ताप इत्यस्मात् कर्तरि लट्, दिवादित्वाच्छ्यन् ॥ ६ ॥

महाजनपरिगृहीत निकृष्टमपि वस्तु श्रेष्ठ भवतीत्यभिप्रेत्याह—

**रत्नाभरणयोग्यानां राजान्तःपुरयोषिताम् ।**
**क्रीडाकङ्कणनिर्माणकाचोऽपि ललितायते ॥ ७ ॥**

**रत्नाभरणेति** ॥ क्रीडाकङ्कणेषु निर्माणार्थकाचोऽपि मृद्भेदकृतदर्पणोऽपि ललितायते परमभोग्यो भवति । 'भृशादिभ्यो भुव्यच्वेर्लोपश्च, हलः' इति अभूततद्भावे क्यङ् । 'काचाश्शिक्यमृद्भेददृग्रुजः' इत्यमरः । राजान्तःपुरयोषितामित्यनेन परमैकान्तिनो विवक्षिताः रत्नाभरणयोग्यानामिति महाराजपरिचरणीयत्वं विवक्षितम् । क्रीडाकङ्कणेत्यनेन तत्सेवायोग्यः कश्चिद्बुद्धिमान् निकृष्टोऽपि विवक्षितः ॥ ७ ॥

यत्र सारासारविवेचकाभावेन तुल्यत्वपरिकल्पन तत्र सता महता मौनमेव युक्तमित्यभिप्रेत्याह —

**मन्ये किन्नरमुख्यानां मौनं जगति सांप्रतम् ।**
**मशककणितं यत्र वीणास्वनविकल्पितम् ॥ ८ ॥**

**मन्य इति** ॥ यत्र मशकक्वणित मशकध्वनिः वीणास्वनेन विकल्पित तुल्य कृतमित्यर्थः । तत्र जगति किन्नरमुख्यानां मौनमेव साम्प्रत मन्ये, युक्तमिति निश्चिनोमि ॥ ८ ॥

क्वचित्कार्यवशेन निकृष्टपरिग्रहेऽपि हृदयाह्लादिनी प्रवृत्तिर्न भवतीत्याह—

**कटूनामिह सार्थत्वात्कामं भवति संग्रहः ।**
**तथापि वृत्तिर्न तथा रसज्ञानुमतिक्षमा ॥ ९ ॥**

**कटूनामिति** ॥ कटूनां तीक्ष्णाना कोपवतामित्यर्थः । ‘रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः’ इत्यमरः । शुण्ठी पिप्पली मरिचा इति वैद्यशास्त्रप्रसिद्धत्रिकटूनां च, सार्थत्वात् सप्रयोजनत्वात् काम यथेच्छ सग्रहः स्वीकारो भवति, तथापि वृत्तिः व्यापारः भक्षण च, तथा समीचीनवत् रसज्ञाना रसिकाना रसज्ञाया जिह्वायाश्चानुमतेरङ्गीकारस्य क्षमा योग्या न भवति । त्रिकटुक निदर्शनम् ॥ ९ ॥

वेदशास्त्रवत्सु वृधा शब्दो न प्रसरतीत्यभिप्रेत्याह—

**नादमङ्कणतालानां लाङ्गलीनटनोचितम् ।**
**श्रुतिक्षमेषु ग्रामेषु न मूर्छयति गीतिवत् ॥ १० ॥**

**नादमिति** ॥ वेदशास्त्रसमर्थेषु ग्रामेषु लाङ्गलीना नारिकेलानाम्, नटने वाय्वादिना चलने, उचितमभ्यस्तम्, अङ्कणतालाना च त्वरवर्तितालवृक्षाणा सहभावेन प्रवृत्त नादम्; श्रुतयः स्वरारम्भकावयवशब्दाः ताभिः क्षमेषु समर्थेषु, ग्रामेषु स्वरसन्दोहेषु, नटनोचित नाट्योचितम्, तालाना कास्यवाद्यानाम्, नाद गीतिवत् गीतिष्विव, न मूर्च्छति न वर्धयति । गीतिषु स्वरारोहावरोहण मूर्छनम्; तत्र तालनादस्य यथारोहावरोहण नास्ति, तथा तत्र तालनादस्य मेलन वेदपाठको न सहते, निरर्थकशब्द न सहत इति भावः ॥ १० ॥

सदसद्विवेचन कस्यचित् भाग्यवशेन भवति, नाभ्यासादित्याह—

**विधिमन्तरेण विहगेन कुतः**
**पयसोरशिक्ष्यत विवेकविधिः ।**

**कति वा दिनानि वद पर्यचिनो-**
**त्कलशीसुतः कबलयन् जलधिम् ॥ ११ ॥**

**विधिमिति ॥** विहगेन हंसेन, विधिमन्तरेण दैवयत्नं विना, पयसोः क्षीरनीरयोः, विवेकविधिः विविच्यग्रहणम्, कुतोऽशिक्ष्यत अभ्यस्तः, न कुतश्चिदपीत्यर्थः । कलशीसुतः अगस्त्यो वा जलधिं कबलयन् कबलनार्थं कतिवा दिनानि पर्यचिनोत् परिचयमकार्षीत् । वदेति परिचयाद्यभावप्रकटनार्थः ॥ ११ ॥

परिशुद्धविद्य एव श्रेयानित्याह—

**एकयाऽपि कलया विशुद्धया**
**योऽपि कोऽपि भजते गिरीशताम् ।**
**भूयसीरपि कलाः कलङ्किताः**
**प्राप्य कश्चिदपचीयते शनैः ॥ १२ ॥**

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य
कृतिषु सुभाषितनीव्यां
**परीक्षितपद्धतिः**
**द्वादशी ।**

**सैषा सुभाषितानां माला महनीयवर्णवृत्तगुणा ।**
**भावुकसङ्घारूढा प्रियपद्धतिभूषिता जयति ॥**

**एकयेति** ॥ कश्चित्कलङ्किता: सम्यगभ्यासाभावेन अनिश्चितार्था:, भूयसी: कला: बह्वी: विद्या:, प्राप्य शनै: अपचीयते क्षीणो भवति, सुदृढविद्यो न भवति, विशुद्धया सम्प्रदायपूर्वकं सम्यगभ्यस्तया, सुनिश्चितार्थया एकया कलयाऽपि, योऽपि कोऽपि यः कश्चिदपि, गिरि वाचि विषये, ईशता स्वतन्त्रत्वम् भजते। अत्र चन्द्र-शिवश्च निदर्शनम् ॥ १२ ॥

तुषारगिरिसच्छायं तुलसीदामभूषणम् ।
तुरङ्गवदनं वन्दे तुङ्गसारस्वतप्रदम् ॥

श्रीमते रामानुजाय नमः ।

इति श्रीमच्छ्रीशैलकुलतिलकस्य वेङ्कटाचार्यसोमसुत: सुतस्य
श्रीश्रीनिवासविदुष कृतिषु सुभाषितनीवी-
व्याख्यायां रत्नपेटिकाख्यायां
**परीक्षितपद्धति:**
द्वादशी ।



# श्लोकानुक्रमणिका ॥

## पुट: ६५.

**शिक्षकेति** ।। शिक्षके शिक्षकसमीपे, हरिताकारो द्विजः शुकः, अपूर्ववर्णवान् भाति अकाराद्यक्षरवान् भाति । मेरौ, नीलतनुः द्विजः काकः, अपूर्ववर्णवान् पूर्ववर्णादन्यवर्णवान् स्वर्णवर्ण इत्यर्थः । सत्यनिष्ठे वसिष्ठे, कौशिकः विश्वामित्रः, अपूर्ववर्णवान् ब्राह्मणवर्णवान्, वर्णशब्दो वर्णत्वपरः न विद्यते यस्मात् पूर्वो वर्णः सोऽपूर्ववर्णः ब्राह्मणवर्णः, ब्राह्मणवर्णाद्धि न पूर्ववर्णोऽस्ति तस्य सर्वपूर्वत्वात् । यद्वा सत्यनिष्ठे गौतमे कौशिकः इन्द्रः, अपूर्ववर्णवान् अवर्णवान् इत्यर्थः । अवर्णम् अधरः परीवादो वा । 'अवर्णाक्षेपनिर्वादपरीवादापवादवत्' इत्यमरः ।। ५ ।।

## पुट: ७६.

**यमेनेति** ।। 'अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता । अस्तेयमिति पञ्चैते यमाश्चैव व्रतानि च ।' इति यमशब्दार्थः उक्तः । उपक्रमे ऐश्वर्यारम्भदशायां, यमेनाहिंसनादिना, व्यवस्थितमेकरूप पुरुषम्, विश्वाधीश विश्वस्य भूमण्डलस्य अधीश प्रभु, जानन् अहिंसादियुक्त एव मण्डलाधिपतिः भविष्यतीति निश्चयवानित्यर्थः । सामादिषु सामदानभेददण्डेषु, तत्त्वज्ञः यथार्थज्ञानवान् च यो भवति । स तादृशः कः सिद्धिं नार्हति । एतादृशः सर्वोऽपि राजा

सिद्धि इष्टार्थप्राप्तिम् अर्हत्येवेत्यर्थः। अर्थान्तरम्। य सनकमेक ब्रह्म-कुमारम्, एनोऽपक्रमे पापापगमे जाते व्यवस्थित वौ परमात्मनि अवस्थितम्, विश्वाधीश च विश्वेषाम् आधीनां मानसव्यथानाम् ईशम् अवश्य च, अजानन् महर्षयो ज्ञातवन्तः। सामादिषु ऋग्यजुः-सामाथर्वणेषु, तत्त्वज्ञः स सनकः सिद्धिमर्हत्येव। 'विः पक्षिपरमात्मनोः' इति भट्टबाणः। 'पुस्याधिर्मानसी व्यथा' इत्यमरः। अर्थान्तरम्। एनोऽपक्रमे पापापगमे, विश्वाधीश प्रपञ्चप्रभु व्यवस्थित हसस्थित च य ब्रह्माण जानन् सामादितत्त्वज्ञः पुरुषो भवति स: कः स ब्रह्मा सिद्धि प्राप्यताम् अर्हतीति। अर्थान्तरम्। सामादि तत्त्वज्ञः पुरुष· व्यवस्थित गरुडस्थित हरि विश्वाधीश चराचरपरि जानन् भवति। 'एको नैक. सवः कः किम्' इति ससज्ञः स हरि सिद्धिम् अनवाप्तावाप्तव्यप्राप्ति नार्हति। 'नानवाप्तमवाप्तव्यम्' इति स्मृतेः॥ ८॥

**प्रयुक्तमिति**॥ काले मन्त्रिभिः प्रयुक्त प्रातिकूल्याभिवृद्धेः प्रागेवामात्यैः कृत, भक्तिभेदात् पुरस्कृत पूजित, साम समीचीनवचनं ज्वलनवक्त्राणामपि क्रोधातिशयेन ज्वलनसदृशमुखानामपि, पर सवनन श्रेष्ठ वशीकरणसाधन। 'वशक्रिया सवननम्' इत्यमरः। अर्थान्तरम्। काले बहिष्पवमानादिप्रयोगकाले मान्त्रिभिः सामगैः ऋग्यजुः-सामानि मन्त्राः तद्विदः मन्त्रिणः 'अहे बुध्न्य मन्त्र मे गोपाय यमृषयस्त्रैविदा विदुः। ऋचः सामानि यजूंषि। सा हि श्रीरमृता सताम्' इति श्रुतेः। प्रयुक्त गीत, भक्तिभेदेन हिङ्काराख्येन भक्तिविशेषेण पुरस्कृत पूर्वभागे कृत हिङ्कारस्य सामानवयवत्वेऽपि 'सप्तभक्

सामोपमीत' इति श्रुत्या स्तोत्राङ्गत्वेन च भक्तिशब्दः। प्रस्तावस्य सामावयवत्वेऽपि सामपुरस्कारकत्वं न सम्भवति, उद्गीथाद्येकदेशपुरस्कारकत्वात्। ज्वलनवक्त्राणामपि अग्निमुखानां देवानामपि, सामगीतिविशेषं परं सवननमिति। यद्वा भक्तिभेदैः प्रस्तावोद्गीथप्रतिहारोपद्रवनिदानाख्यैः विभागविशेषैः पूजितमिति ॥ ९ ॥

**विधाविति** ॥ नीत्या जैमिनिमुनिप्रणीतन्यायकलापेन, विधौ शास्त्रार्थे, लब्धधृतिः निर्भयः, क्रियमाणे कर्मण्यन्यथाशङ्का हि दुरितोत्पत्तिशङ्काजननद्वारा भीतिमुत्पादयति, न्यायजनितो निर्णयः तां शङ्कां वारयति। विनतानन्दनः आनतानां ऋत्विजां दक्षिणाभिः आनन्दोत्पादकः, द्विजः त्रैवर्णिकः, स्थानेषु नियम्यमानैः भुजङ्गैरपि भूष्यते सञ्जपनविशसनादिषु नियुज्यमानैः कुपितैरपि स्तूयते। अर्थान्तरम्। नीत्या इष्टदेशप्रापणेन तदर्थमित्यर्थः। विधौ विष्णौ, लब्धधृतिः प्राप्तधारणः, विनतानन्दनः द्विजः वैनतेयः पक्षी, स्थानेषु शिरःकर्णभुजवक्षःकटिपादेषु, नियम्यमानैः बध्यमानैः, भुजङ्गैः सर्पैरपि, भूष्यते अलङ्क्रियते ॥ १० ॥

**नीतिरिति** ॥ व्यवहारासमर्थस्य कोकिलस्य शैशवे शरीररक्षार्थं काककुलान्तर्भावोऽपेक्षितः। साध्यनिष्पत्त्युत्तरकालं विजातीयसहवासस्य दुःखावहत्वेन सजातीयसहवासस्य हृद्यत्वेन च काककुलबहिर्भावोऽपेक्षितः। एतदुभयं काकैरेव घटयतो विधेः साजात्यवैजात्यबुद्ध्युत्पादनरूपसामर्थ्यप्रशंसया परैरेव स्वार्थं घटयतः पुरुषविशेषस्य सामर्थ्यप्रशंसा व्यनक्ति। हे परपुष्ट, कोकिल, यतः नीतेः, त्वं, बलिपुष्टैः काककुलैः पुत्रीकृतोऽसि। एष विधिः तव कर्णे यथा पञ्चमम्

उच्चकार उद्गीर्णवान् विभक्तवान् । ततः, काले तस्मिन् काले, परुषैः तैरेव यतो नीतेः दूरीकृतश्चासि । त्वयि धातुः सा नीतिः साजात्य-वैजात्यबुद्धयुत्पादनरूपा पर सती अत्यन्तं श्लाघ्या ॥ ११ ॥

## पुटः ८३.

**वदान्येति** ॥ कदर्यश्च, गृहीतस्थिरलोभतः इद स्थिर भूयादिति भावात्, परान् अन्यान्, अर्थैः अयोजयन्, कस्मैचित् किंचित् अददत्, स्वजनानामनर्थहेतून् अर्थान् धनानि, सचिनोति । परेभ्योऽर्थे दत्ते स्वार्थनाशः स्यादिति मत्वा न किंचित् ददाति, प्रत्युत स्वजनान् बाधते स्वार्थलोभायेति भावः । वदान्यः, गृहीतस्थिरलोभतः गृहीतमिद स्थिरं मे भूयादिति इच्छया स्वान् अर्थान् आत्मीयधनानि, परानर्थैः परोपद्रवैः, अयोजयन परोपद्रवे कृते तत्रानुकूलार्थनाशः स्यादिति बुद्धया स्वेनार्थेन परान् अपीडयन्नित्यर्थः । अर्थान् सचिनोति ॥ ९ ॥

**अनिःशेषित इति** ॥ दातव्यम् अपरेप्सित तेन च तत्प्रश्नो लक्ष्यते । अनिःशेषितः असमाप्तः दातव्यः ईप्सितप्रश्नो येन तम् । वदान्यमिति वादिनं अन्यदीप्सित वदेति वादिन पुरुषम्, अर्थी जनः, सव्रीलः नोपसर्पति व्रीलया आकुला वधूरिव, महत् अस्माकम् ईप्सित कथमय दास्यतीति आगमनदशायाम् उत्पन्नाया बुद्धेः सर्वमीप्सितम् दत्त्वा पुनः अन्यत् वद इति प्रश्नेन बाधितत्वात् लज्जा ॥ १० ॥

